एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः एभिर्वर्धास
इन्दुभिः ॥ ७ ॥ आ ते वत्सो मनो यमत्परमाच्चि-
त्सधस्थात् अग्ने त्वां कामये गिरा ॥ ८ ॥ त्वा-
मग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्व-
स्य वाघतः ॥ ९ ॥ अग्ने विवस्वदा भरास्मभ्यमू-
तये महे देवो ह्यसि नो दृशे ॥१० ॥ इति प्रथम
प्रपाठकस्य प्रथमार्द्धप्रथमादशतिः ॥

अथ प्रथम प्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः॥

नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः अमैर-
मित्रमर्दय ॥ १ ॥ दूतं वो विश्ववेदसꣳ हव्यवाह-
ममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ २ ॥ उप त्वा
जामयो गिरो देदिशतीर्हविष्कृतः । वायोरनीके
अस्थिरन् ॥ ३ ॥ उप त्वाग्ने दिवे दिवे दोषाव-
स्तर्धिया वयम् । नमो भरन्त एमसि ॥ ४ ॥ ज-
राबोध तद्विविड्ढि विशे विशे यज्ञियाय । स्तो-

२ ३१२ ३२ २३ १ ३र ३
म॑ रुद्रायद्गृशीकम् ॥ ५ ॥ प्रति त्यं चारु मध्व-
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रं गोपीथाय प्रहूयसे । मरुद्भिरग्न आ गहि ॥६॥
२ ३ २ ३ १ २ ३ १ २ ३ १ २र
अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः
३ १ २ ३ १ २ ३ १ २र
सम्राजं तमध्वराणाम् ॥ ७ ॥ और्वभृगुवच्छुचिम-
३ १ २र ३ १ २ ३ १ २
प्रवानवदाहुवे । अग्निᳬसमुद्रवाससम् ॥ ८ ॥
२ १ २ ३ १ २र ३ १ २ ३ १ २ ३
अग्निमिन्धानो मनसा धियᳬसचेतमर्त्यः । अ-
१ २ ३ १ २ २उ ३ २ ३ १ २ ३
ग्निमिन्धे विवस्वभिः ॥ ९ ॥ आदित्प्रत्नस्य रेतसो
१ २ ३ २ ३ २उ ३ १ २ ३
ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दि-
२
वि ॥ १० ॥

इति प्रथम प्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः
अथ प्रथम प्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः॥

३ २ २ ३ १ २ ३ १ २ ३ १ २ २ ३
अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा
२ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
नप्त्रे सहस्वते ॥ १ ॥ अग्निस्तिग्मेन शोचिषायᳬ
३ २ ३ २ १ २ ३ १ २ ३ २
सद्विश्वं न्यात्रिणम् । अग्निर्नोवᳬसते रयिम् ॥२॥
१ २ ३ २ ३ २ ३ २ ३ १ ३ ३ १ २र ३
अग्ने मृड महाᳬ अस्यय आ देवयुं जनम् । इ-

१ २ ३ २ ३ १ २ २ ३ १ २ ३ १ २ ३
येथ बर्हिरासदम् ॥ ३ ॥ अग्ने रक्षाणो अꣳहसः
१ २ ३ २ १ २ ३ १ २
प्रति स्म देव रीषतः । तपिष्ठैरजरोदह ॥ ४ ॥
१ २ ३ १ ३र ३र १ २ ३ १ २ ३ ३
अग्ने युंक्ष्वा हि ये तवाश्वासो देवसाधवः अरं
१ २ ३ १ २ १ २ २
वहन्त्याशवः ॥ ५ ॥ नित्वा नक्ष्य विश्पते द्यु-
१ २ ३ २ ३ १ २
मन्तं धीमहे वयम् । सुवीरमग्न आहुत ॥ ६ ॥
३ २ ३ २ ३ २ ३ १ ३र ३ २ ३ २
अग्निर्मूर्ध्वा दिवः ककुत्पतिः पृथिव्या अयम् ।
३ १ ३र ३ २ ३ २उ ३
अपाꣳरेताꣳसि जिन्वति ॥ ७ ॥ इममू षु त्वम-
१ २ ३ १ २ ३ १र २र १ २ ३ २ ३ १
स्माकꣳसनिं गायत्रं नव्याꣳसम् । अग्ने देवेषु प्र
२ १ २ ३ १ २ ३ १
वोचः ॥ ८ ॥ तं त्वा गोपवनो गिरा जनिष्ठद
१ २ ३ १ २ २ ३
ग्ने अङ्गिरः । स पावक श्रुधी हवम् ॥ ९ ॥ परि
१ २ ३ २ ३ २ ३ १ २ २ ३ १ २
वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि
३ १ २ २ ३ २ ३ १ २ ३ १ २
दाशुषे ॥ १० ॥ उदु त्यं जातवेदसं देवं वहन्ति
३ १ २ ३ १ ३र ३ १ २ ३ १ ३ १ ३र
केतवः दृशे विश्वाय सूर्य्यम् ॥११॥ कविमग्निमुप
३ १ २ ३ २ ३ १ २ ३ १ २
स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम्॥१२

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ उ
शं नो देवीरभीष्टये शंनो भवन्तु पीतये । शं यो-
३ १ २ १ २ ३ १ २ र ३ १ २
रभिस्रवन्तु नः ॥ १३ ॥ कस्य नूनं परीणसि धियो
१ २ ३ १ २ ३ १ २
जिन्वसि सत्पते । गोपाता यस्य ते गिरः ॥ १४॥
इति प्रथम प्रपाठकस्य प्रथमार्द्धे तृतीयादशतिः ॥
अथ प्रथम प्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । प्रप्र
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ र
वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् १
३ १ २ ३ १ २ ३ २ २ ३ १ २ ३ २
पाहि नो अग्न एकया पाह्युत द्वितीयया । पाहि
३ २ ३ १ २ २ १ २ ३ १ २ ३
गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो २ बृ
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा । भरद्वा
३ १ २ ३ १ २
जे समिधानो यविष्ट रेवत्पावक दीदिहि ॥ ३ ॥
१ २ ३ १ २ २ १ २ ३ २
त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः । यन्ता-
३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
रो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ४॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः । अप्रो
३ १ २ ३ २ ३ १ २ ३ २
षिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणायुः

॥ ५ ॥ अग्ने विवस्वदुपसश्चित्रꣳराधो अमर्त्य आ दाशुषे जातवेदो वहा त्वमद्या देवाꣳउषर्बुधः ॥ ६ ॥ त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय । अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ७ ॥ त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः । त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ८ ॥ आ नो अग्ने वयोवृधꣳ रयिं पावकशꣳस्यम् । रास्वा च न उपमाते पुरुस्पृहꣳ सुनीती सुयशस्तरम् ॥ ९ ॥ यो विश्वा दयते वसु होता मन्द्रो जनानाम् । मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १० ॥

इति प्रथमप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः ॥

अथ प्रथम प्रपाठकस्य प्रथमार्द्धे पंचमी दशतिः ॥

एना वो अग्निं नमसोर्जो न पातमा हुवे । प्रियं चेतिष्ठमरतिꣳस्वध्वरं विश्वस्य दूतममृतम् ॥ १ ॥

२ ३ १ २ ३ २ ३ २ ३ १ २ १ २
शेपे वनेषु मातृषु सं त्वा मर्तास इन्धते । अत-
३ १ २ ३ २ ३ २ उ ३ १ २
न्द्रोहव्यं वहसि हविष्कृत आदिद्देवेषु राजसि॥२॥
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ २ ३
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः । उपो
२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
षु जातमार्य्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥३॥
३ २ २ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
अग्निरुक्थे पुरोहितो ग्रावाणो वर्हिरध्वरे । ऋ-
१ २ ३ २ ३ २ ३ १ २
चा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम्॥४
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् । अ-
२ ३ १ २ ३ २ उ ३ १ २ ३ १ २ ३ २
ग्निंराये पुरुमीढ़ श्रुतं नरोऽग्निः सुदीतये छर्दिः॥५
३ १ २ ३ १ ३ ३ १ २ ३ १ २ १
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः । आ-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
सीदतुबर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे॥६॥
१ २र ३ २ ३ २ उ ३ २ ३ १ २ १ २
प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना । अनु
३ १ २ ३ १ २र ३ १ २र ३ १ २
मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि॥७
२ ३ १ २र ३ १ २ ३ १ २ ३ १ २र
अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
३ १ २ ३ क २ र ३ २ उ ३ १ २
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतोपृण॥८

१ २ ३२उ ३ १ २र ३२ १ २ र
कायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते
३ १ २ ३ १ २उ २ २ ३२उ ३ १ २
अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभुवः ॥ ९ ॥
१ २र ३ १ २ ३ २ ३ २ १ २ १ ३ ३
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते । दी-
२ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
देथ कण्वऋतजात उक्षितो यं नमस्यन्ति कृष्टयः१०

इति प्रथमप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः ।

इति प्रथम प्रपाठकस्य प्रमार्द्धे समाप्तम्

अथ प्रथम प्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ॥

३ १ २ ३ २ ३ १ २ ३ १ २ १ २
देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् । उद्वा
३ २ ३ १ २ ३ १ २र ३ १ २
सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १ ॥
२ ३ १ २ ३ ३ २ ३क २र ३ १ २ १ २ ३
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वी-
१ २र ३ १ २ ३ २ ३ १ २
रं नर्य्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ २ ॥
३ २ ३ १ २ ३ २ ३ १ २ ३ १ ३र ३ २ ३
ऊर्द्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊ-
१ २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
र्द्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे३
२उ ३ १ २र ३ २ ३ १ २ ३ १ २ २
प्रयो राये निनीषति मर्त्तो यस्ते वसो दाशत् । स
३ १ २ २ ३ १ २ ३ १ २
वीरं धत्तेऽग्न उक्थशꣳसिनं त्मना सहस्रपोषिणम्४

१ २ ३१ २३२ ३ १ २ ३१२ ३ २
प्र वो यह्वं पुरूणां विशां देवयतीनाम् । अग्निꣳ
३ २ ३ १ २ ३ २उ ३ २ ३ १ २
सूक्तेभिर्वचोभिर्वृणीमहे यꣳ समिदन्य इन्धते॥५॥
३ २ ३ २ ३ २ ३ २ ३ १ २र ३ १ २
अयमग्निः सुवीर्य्यस्येशे हि सौभगस्य । राय ईशे
३ २ ३ १ २ ३ १ २ ३ १ २ १ २
स्वपत्यस्य गोमत ईशे वृत्रहथानाम्॥ ६ ॥ त्वम-
३ १ २ ३ १ २र ३ २ १ २र
ग्ने गृहपतिस्त्वꣳहोता नो अध्वरे। त्वं पोता वि-
३ १ २ ३ २ ३ १ २ ३ १ २ १
श्ववारप्रचेता यक्षि यासि च वार्य्यम् ॥ ७ ॥ स-
२ ३ १ २र ३ १ २ ३ १ २र
खायस्त्वा ववृमहे देवं मर्त्तास ऊतये । अपां नपा-
३ १ २ ३ १ २ ३ १ २ ३ १ २
तꣳसुभगꣳसुदꣳससꣳसुप्रतूर्त्तिमनेहसम् ॥८॥ इति
प्रथमप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ।

१ २ ३ १ २ २ १ २र
आ जुहोता हविषा मर्जयध्वं नि होतारं
३ १ २ ३ २ ३ १ २र ३ १ २
गृहपतिं दधिध्वम् । इडस्पदे नमसा रातहव्यꣳ स-
३ १ २ ३ २ ३क २र ३२उ ३
पर्यता यजतं पस्त्यानाम् ॥ १ ॥ चित्र इच्छिशो-
१ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
स्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे ।
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २र
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि

३ २ १ २ ३ २ ३ १२ ३१२ ३१२ ३
दूत्यं चरन् ॥ २ ॥ इदं त एकं पर ऊ त एकं तृ-
१२३ १ २ ३ १ २ ३१२ ३ २ १
तोयेन ज्योतिपा सं विशस्व । संवेशनस्तन्वे३चा-
२ ३२ ३१ २ ३२३१२ ३२उ
रुरेधि प्रियो देवानां परमे जनित्रे ॥ ३ ॥ इमं
३१२ ३१२ ३ १२ ३१ २ ३
स्तोममर्हते जातवेदसे रथमिव सं महेमा मनी-
१ २ ३२उ ३ १२ ३ १ २२ ३
षया । भद्रा हि नः प्रमतिरस्य सछसद्यग्ने स-
१ २र ३१ २र ३१२ ३१ २
ख्ये मा रिषाम वयं तव ॥ ४ ॥ मूर्द्धानं दिवो अ-
३१ २ ३१ २ ३२३२उ ३२ ३२
रतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
३२ ३ २ ३१ २ ३ १२ ३ २३ १ २
कविं सम्राजमतिथिं जनाना मासन्नः पात्रं ज-
३२ २उ ३ १ २र ३
नयन्त देवाः ॥ ५ ॥ वि त्वदापो न पर्वतस्य पृ-
२ ३ १२ ३२ २ ३ १२
ष्ठादुक्थेभिरग्ने जनयन्त देवाः । तं त्वा गिरः
३१२ ३ १ २र३१२ ३ १२
सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ६
२ ३ १ २ ३१ २ ३१ २र ३ २३
आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं
१ २ ३ २ ३१ २ ३२३ २ ३ १२
रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्य-
३१२ १२उ ३ २३१
रूपमवसे कृणुध्वम् ॥ ७ ॥ इन्धे राजा समर्यो न-

२२ ३ २ ३ १२ ३ १ २ ३१२ १३ २१२
मोभिः यस्य प्रतीकमाहुतं घृतेन । नरो हव्येभि-
३ २ ३ १ २२ ३ १ २ २ ३
रीळते सबाध अग्निरग्रमुपसामशोचि॥ ८ ॥ प्र के-
१ २ ३ १ २ ३ १ ३२ ३ १ २
तुना वृहता यात्यग्नि रा रोदसी वृषभो रोरवी-
३ २ ३ १ २ ३ १ २२ ३ २ ३ १ २ ३ १
ति । दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो
३ ३ २उ ३ १ २ ३ २ ३ १ २
ववर्द्ध ॥ ९॥ अग्निं नरो दीधितिभिररण्यो र्हस्त-
३ २ ३ १ २ ३ १ २ ३ १
च्युतं जनयत प्रशस्तम् । दूरेदृशं गृहपतिमथव्यु-
म् ॥१०॥ इति प्रथमप्रपाठकस्य द्वितीयार्द्धे द्वितीया
दशतिः ।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
अबोध्यग्निःस मिधा जनानांप्रति धेनुमिवायतीमु-
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
पासम् । यह्वा इव प्र वयामुज्जिहानाः प्र भानवः
३ २ ३ १ २ २ ३ १ २ ३ १ २ ३
सस्रते नाकमच्छ ॥ १ ॥ प्र भूर्जयन्तं महां विपो-
२ ३ १ २ ३ २ ३ १ २ १ २ ३ २ ३ १
धां मूरैरमुरं पुरां दर्माणम् । नयन्तं गीर्भिर्वना
२ ३ १ २ ३ १ २ ३ २
धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् ॥ २ ॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
शुक्रं ते अन्यद्यजतं ते अन्यद्विपुरूपे अहनी
१ २ २ ३ २ ३ १ २
द्यौरिवासि । विश्वा हि माया अवसि स्वधावन्

३ १ २ ३२ ३ १ २ १ २ ३
भद्रा ते पूर्षन्निह रातिरस्तु ॥ ३ ॥ इडामग्ने पुरु-
१ २ ३ १ २र ३ १ २उ
दꣳसꣳ सनिं गोःशश्वत्तमꣳ हवमानाय साध ।
१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भू-
३ २ १ २र ३ २ ३ १ ३ ३ २ ३ १
त्वस्मे ॥ ४ ॥ प्र होता जातो महान्नभोविन् नृष-
२ ३ १ २ ३ २ २ ३ २ ३ २ ३ १ २र
द्मा सीददपां विवर्त्ते । दधद्यो धायी सुते वया-
३ १ २र ३ १ २ ३ २ २ ३
ꣳसि यन्ता वसूनि विधते तनूपाः ॥ ५ ॥ प्र स-
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
म्राजमसुरस्य प्रशस्तं पुꣳसः कृष्टीनामनुमाद्यस्य ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना
३ २ ३ १ २ ३ १ २ ३ १ २ ३
विवष्टु ॥ ६ ॥ अरण्योर्निहितो जातवेदा गर्भ इ-
१ २र ३ १ २ ३ १ २ ३ १ २ ३
वेत्सुभृतो गर्भिणीभिः । दिवेदिव ईड्यो जागृ-
१ २ ३ १ २ १ ३क २र ३ २ ३ १ २
वद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ७ ॥ सनादग्ने
३ २ ३ २ ३ १ २ ३ १ २
मृणसि यातुधानान् न त्वा रक्षाꣳसि पृतनासु जि-
१ २ ३ १ २ ३ २ ३ १ २ ३ १
ग्युः । अनु दह सहमूरान् क्रयादो मा ते हेत्या
२ ३ १ २
मुक्षत दैव्यायाः ॥ ८ ॥ इति प्रथमप्रपाठकस्य

द्वितीयार्द्धे तृतीया दशतिः ।

२ ३ १ २ ३१ २ ३ २३ १२ १
अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो । प्र
२ ३१ २र ३ २ ३ १ २ ३ १ २
नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥ १ ॥
१२ ३ २उ ३ २ ३ १ २ ३ १ २ ३
यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः । आ-
१ २ ३ १ २ ३ १ २र ३ १ २ ३ १
जुह्वद्धव्यमानुषक्शर्म भक्षीत दैव्यम् ॥ २ ॥ त्वेष-
२ ३ १ २ ३ २उ ३ १ २र २ ३
स्ते धूम ऋण्वति दिवि सं छुक्र आततः । सूरो
२उ ३ २र ३ १ २ ३ १ २ १
न हि द्युता त्वं कृपा पावक रोचसे ॥ ३ ॥ त्वं
२र ३ १ २र ३ १ २र १ २
हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे । त्वं विच-
३ २३१२ ३ १ २र ३ २३ १
र्षणे अवो वसो पुष्टिं न पुष्यसि ॥ ४ ॥ प्रातरग्निः
२ ३ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
पुरुप्रियो विश स्तवेतातिथिः । विश्वे यस्मिन्नम-
३ १ २र ३ १ २ १ २र ३ २ ३
र्त्ये हव्यं मर्त्तास इन्धते ॥ ५ ॥ यद्वाहिष्ठं तद-
१२ ३ १ २ १ २ ३ २ ३ २उ
ग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्व
३ १ २ ३ १ २ ३ १ २
द्वाजा उदीरते ॥ ६ ॥ विशो विशो वो अतिथिं
३ १ २ ३ २ ३ २ ३ २ ३ १ २
वाजयन्तः पुरुप्रियम् । अग्निं वो दुर्यं वचः

२ २ २ २ ३ १ २ ३ २उ ३ २ ३ १
स्तुपे शूपस्य मन्मभिः ॥ ७ ॥ बृहद्वयो हि भान-
२र ३ २ ३ १ २ २ ३ १ २र ३ १ २
वेऽर्च्चा देवायाग्नये । यं मित्रं न प्रशस्तये मर्त्ता-
३ १ ३ २ १ २ ३ १ २ ३ १ २
सो दधिरे पुरः ॥ ८ ॥ अगन्म वृत्रहन्तमं ज्येष्ठ
३ १ २र १ २ ३ १ २ ३ २ ३ १ २ ३
मग्निमानवम् । यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इ-
१ २ ३ १ २र३ १ २ ३ २ ३ १ २ ३ १
ध्यते ॥ ९ ॥ जातः परेण धर्मणा यत्सवृद्भिः सहा
२ ३ २उ ३ १ २ ३ २ ३ २ ३ १ २र
भुवः ।पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः
३ २
कविः॥ १० ॥

इति प्रथमपाठकस्य द्वितीयार्द्धे चतुर्थी दशतिः ।
प्रथमप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
सोमꣳराजानं वरुणमग्निमन्वारभामहे । आदि
२र ३ १ २ ३ १ २ ३ २ ३ १ २
त्यं विष्णुꣳसूर्य्यं ब्रह्माणं च बृहस्पतिम् ॥ १ ॥
३ २ ३ २ ३ १ २ ३ २ ३ १ २र २ ३ २
इत एत उदारुहन् दिवः पृष्ठान्या रुहन् । प्रभूर्ज
३ १ २ ३ १ २र ३ १ २
यो यथा पथोद्यामङ्गिरसो ययुः ॥ २ ॥ राये अ
३ २ ३ १ २ ३ १ २ १ २ ३ २
ग्ने महे त्वा दानाय समिधीमहि । ईडिष्वा हि

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३
महे वृषं द्यावा होत्राय पृथवी ॥ ३ ॥ दधन्वे वा
२ ३ २ ३ २ ३२उ ३ २३ २ २ ३ १ २ ३
यदीमनु वोचद्ब्रह्मेति वेरु तत् । परि विश्वानि
१ २ ३ २ ३ १ २ १ २ ३ १ २ ३
काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥ प्रत्यग्ने हरसा
१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
हरः शृणाहि विश्वतस्परिः । यातुधानस्य रक्षसो
२३क २र ३क२र १ २ ३ १ २ ३ २ ३ १ २
बलं न्युब्ज वीर्य्यम्॥५॥त्वमग्ने वसूंरिह रुद्रांआ
३ २ ३ २ १ २ ३ २उ ३ १ २ ३ १ २
दित्यांउत । यजा स्वध्वरं जनं मनुजातं घृतप्रुप
म् ॥ ६ ॥

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः

इति प्रथमः प्रपाठकः समाप्तः ।

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
पुरु त्वा दाशिवांवोचेऽरिरग्ने तव स्विदा । तो
१ २ ३ २उ ३ १ २ १ २र ३ २उ
दस्येव शरण आ महस्य ॥ १ ॥ प्र होत्रे पूर्व्यं व
३ १ २ ३ २ ३ १ २र ३ १ २
चोऽग्नये भरता बृहत् । विपां ज्योतींषि बिभ्र
३ २ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २
ते न वेधसे ॥ २ ॥ अग्ने वाजस्य गोमत ईशानः
३ १ २ ३ २ ३ १ २
सहसो यहो । अस्मे देहि जातवेदो महि श्रवः॥३॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १
अग्ने यजिष्ठो अध्वरे देवां देवयते यज । होता मन्द्रो

२र ३ २ ३ १ २ २ २ ३२ ३१
वि राजस्यति स्त्रिधः ॥ ४ ॥ जज्ञानः सप्त मातृ
२ ३ १ २र ३ २ ३२ १ ३ २ ३ १ २
भिर्मेधामाशासत श्रिये । अयं ध्रुवो रयीणां चि
३ २ ३ २उ ३ १ २ ३१ २र ३
केतदा ॥ ५ ॥ उत स्या नो दिवा मतिरदितिरू
१ २ १ २र ३ १२ ३२ ३ १२
त्यागमत् । सा शन्ताता मयस्करदप स्त्रिधः ॥ ६ ॥
१२ ३ २ ३ २ १२ ३१२ ३
ईडिष्वा हि प्रतीव्या३यजस्व जातवेदसम् । चरि
३ २३१२ १ २र ३ १
ष्णु धूममगृभीतशोचिषम् ॥ ७ ॥ न तस्य माय
२ ३ २ ३१,२ ३ १ २ २ ३१ २ ३१ २
या च न रिपुरीशीत मर्त्यः । यो अग्नये ददाश
३ १ २ २ ३ २ ३ २ ३ २ ३ १२
हव्यदातये ॥ ८ ॥ अप त्यं वृजिनꣳ रिपुꣳस्तेनमग्ने दु
३क २र १ २ ३ २ ३ २
राध्यम् । दविष्ठमस्य सत्पते कृधी सुगम् ॥ ९ ॥
३क २र ३ १ २ ३ १ २ २
श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते । नि
३ २ ३ १ २ ३ १ २
मायिनस्तपसा रक्षसो दह ॥ १० ॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः
प्रथमस्याध्यायस्य एकादश खण्ड ।

१ २ ३ १ २ ३ १ ३ १ २
प्र म५ हिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचि
३ १ २ ३ १ २ १ २र १ ३
षे । उप स्तुतासो अग्नये ॥ १ ॥ प्रसोअग्नेतवो

१ २ ३ १ २ ३ १ २ २ ३ २
तिभिः सुवीराभिस्तरति वाजकर्मभिः। यस्य त्व
३ १ २र १ २ ३क २र ३ ३ १ ३
एसख्यमाविथ ॥ २॥ तं गूर्द्धया स्वर्णरं देवासो दे
१ २ ३ १ २ ३ २ ३ १ २ १
वमरतिं दधन्विरे। देवत्रा हव्यमूहिषे ॥ ३॥ मा
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः।
२ ३ १ २ ३ २ ३ १ २ ३ १ २र
यः सुहोता स्वध्वरः ॥ ४॥ भद्रो नो अग्निराहु
३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३१
तो भद्रा रातिः सुभग भद्रो अध्वरः। भद्रा उत
२र १ २ ३ १ २ ३ १
प्रशस्तयः ॥ ५॥ यजिष्ठं त्वा ववृमहे देवं देवत्रा हो
२र ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
तारममर्त्यम्। अस्य यज्ञस्य सुक्रतुम् ॥ ६॥ तदग्ने
३ १ २र ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम्।
३ १ २२ ३क २र १ २र ३ १ २
मन्युं जनस्य दूढ्यम् ॥ ७॥ यद्वा उ विश्पतिः
३ १ २र ३ २ १ ३ २ २उ ३ २उ ३ १
शितः सुप्रीतो मनुषो विशे विश्वेदग्निः प्रति र-
२
क्षांऽसि सेधति ॥ ८॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः

२ १ ३ १ २र ३ २ ३ १ २ ३२
तद्वो गाय सुते सचा पुरुहूताय सत्वने। शं यद्गु

३ २ ३ १ २ १२ ३१ २ ३१२ ३
वे न शाकिने ॥ १ ॥ यस्ते नूनꣳशतक्रतविन्द्र द्यु
१ २ ३ १२ ३१ २र ३ २
म्नितमो मदः । तेन नूनं मदे मदेः ॥ २ ॥ गाव
१२ ३२ ३२ ३१ २ ३१ २ ३१ २र
उप वदावटे मही यज्ञस्य रप्सुदा । उभा कर्णा
३१२ २३१२ ३ १ २३१२ २
हिरण्यया ॥ ३ ॥ अरमश्वाय गायत श्रुतकक्षारं
१२ २३१२ ३ १ २ १ २र
गवे । अरमिन्द्रस्य धाम्ने ॥ ४ ॥ तमिन्द्रं वाजया
३२ ३२३१ २ १ २र ३ १ २
मसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत्॥५॥
१२ ३ २३ २३ १२ ३१ २र १
त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वꣳ
२र३ १२र १ २र ३२उ ३
सन् वृषन् वृषेदसि॥६॥यज्ञ इन्द्रमवर्द्धयद्यद्भूमिं
१२ ३ १२ ३२ ३२ १२
व्यवर्त्तयत् । चक्राण ओपशं दिवि ॥ ७ ॥ यदि-
३२उ ३ १ २र ३ २३ ३३ २ ३२ ३
न्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे
१ २ १२ ३ १ २ ३ १
गोसखा स्यात् ॥ ८ ॥ पन्यंपन्यमित्सोतार आ
२ ३ १ २ १२ ३२ ३ १ २ ३१
धावत मद्याय । सोमं वीराय शूराय ॥ ९ ॥ इदं
२ ३२उ ३ २३ १२ ३११ १२
वसो सुतमन्धः पिबा सुपूर्णमुदरम् । अनाभयि-
३१ २
न् ररिमा ते ॥ १० ॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः।

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

२उ ३२ ३१२ ३१ २र १२
उद्घेदभि श्रुतामघं वृषभं नर्य्यापसम्। अस्तार-
२३१ २र ३१२ ३
मेषि सूर्य्य ॥ १ ॥ यदद्य कच्च वृत्रहन्नुदगा अ-
१ २ २१ २ ३१२ १ २र
भि सूर्य्य। सर्वं तदिन्द्र ते वशे ॥ २ ॥ य आनं-
३२३ १२ ३२३१२ २३ २ ३
यत्परावत, सुनीती तुर्वशं यदुम्। इन्द्रः स नो
२३१२ १२ ३२ २३ १२
युवा सखा ॥ ३ मा न इन्द्राभ्या३ दिशः सूरो
३१ २र २ ३१२३ २ १
अक्तुष्वा यमत। त्वा युजा वनेम तत् ॥ ४ ॥ ए
२ ३२ ३२ ३१२ ३१२ १
न्द्र सानसिं रयिं सजित्वानं सदासहम्। व-
२ ३१२ १२ ३१२ ३२उ ३
र्षिष्ठमूतये भरा ॥ ५ ॥ इन्द्रं वयं महाधन इन्द्र-
१२ १२ ३१ २३१२ १२
मर्भे हवामहे युजं वृत्रेषु वज्रिणम् ॥ ६ ॥ अपि
३१२ ३२ २र ३२२ १२ ३
वत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे। तत्रादिदिष्ट
१ ३१२ ३२३ १ २र
पौंस्यम् ॥ ७ ॥ वयमिन्द्र त्वायवोऽभि प्र नोनु-
३२ १२
मो वृषन्। विद्धी त्वा६ स्य नो २ वसो ॥ ८ ॥
२ ३ २ ३ २ ३१२ ३१२ ३१२३२
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।

२ ३ २ ३ २ ३ १ २ ३ २उ ३ २ ३ २ ३
येषामिन्द्रो युवा सखा ॥९॥भिन्धि विश्वा अप द्विषः
३ २ १ २ ३ १ २र १ २ ३ १ २र
परि बाधो जही मृधः।वसुस्पार्हं तदा भर ॥ १० ॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः

३ १ २ ३ २ ३ १ २ ३ १ २र १ ३ २र
इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि यामं
३ १ २ ३ १ २ ३ १ २ ३ १ २
चित्रमृञ्जते ॥ १ ॥ इम उ त्वा वि चक्षते सखाय
२ १ २ १ २ ३ १ २ ३ २ १
इन्द्र सोमिनः। पुष्टावन्तो यथा पशुम् ॥ २ ॥ स-
२ ३ २ ३ २ ३ १ २ ३ १ २ ३
मस्य मन्यवे विशो विश्वा नमन्त कृष्टयः। समु-
१ २ ३ १ २ ३ २ ३ १ २र ३ १
द्रायेव सिन्धवः ॥ ३ ॥ देवानामिदवो महत्तदा
२र ३ २ १ २ ३ १ २ ३ १ २ ३
वृणीमहे वयम्। वृष्णामस्मभ्यमूतये ॥ ४ ॥ सो-
२ ३ १ २ ३ २ २ ३ १ २ ३ १
मानᳫं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य
२ ३ २ १ २ ३ १ २ २ १
औशिजः ॥ ५ ॥ बोधन्मना इदस्तु नो वृत्रहा
२र ३ १ २ ३ २ ३ १ २ ३
भूर्यासुतिः। शृणोतु शक्र आशिषम् ॥ ६ ॥ अ-
१ २ ३ १ २ ३ १ २ १ २
द्या नो देव सवितः प्रजावत्सावीः सौभगम्। परा

३ १ २ २ १ २३१ २र ३
दुष्वप्न्यꣳसुव ॥ ७ ॥ क्वा३स्य वृषभो युवा तुवि-
२ ३ १ २ ३ १ २र
ग्रीवो अनानतः । ब्रह्मा कस्तꣳ सपर्य्यति ॥ ८ ॥
३ १ २ ३ १ २ ३१ २ ३१२ ३ १
उपह्वरे गिरीणाꣳ सङ्गमे च नदीनाम् । धिया वि-
२र २ ३१ २ ३ १ २र
प्रो अजायत ॥ ९ ॥ प्र समाजं चर्षणीनामिन्द्रꣳ
३ १ २ ३ २ १२ ३२३ १ २
स्तोता नव्यं गीर्भिः । नरं नृषाहं मꣳहिष्ठम् ॥१०॥
इति द्वितीयप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः ।
अथ द्वितीयप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः।
१ २ ३ १ २ ३ १ २ ३ १२ २ ३
अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः । इन्द्रो-
२ ३ १२ ३ १ २ ३ १
रिन्द्रो यवाशिरः ॥ १ ॥ इमा उ त्वा पुरूवसोऽभि
२र ३१ ३ १ २ ३२उ ३१२ २उ
प्र नोनवुर्गिरः । गावो वत्सं न धेनवः॥२॥अत्रा-
१ २ ३ २ ३ १ २ ३क २र ३ २ ३१२
गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो
२ २ २उ ३ १ २ ३ १ २ ३ २ ३ १ २र
गृहे ॥ ३ ॥ यदिन्द्रो अनयद्रितो महीरपो वृषन्त-
१ २ ३ १ २ ३ १ २ १ २ ३ १ २
मः । तत्र पूषाभुवत्सचा ॥ ४ ॥ गौर्धयति मरुता
३ २ ३ २ ३ १ २ ३ २उ ३ १ २
ꣳश्रवस्युर्माता मघोनाम् । युक्ता वह्नी रथाना-
१ २ ३ १ २ ३ २ ३ १ २
म् ॥ ५ ॥ उप नो हरिभिः सुतं याहि मदानां पते

१ २ ३ १ २ ३ २ ३ १ २र ३
उप नो हरिभिः सुतम् ॥ ६॥ इष्टा होता असृक्ष-
१ २ ३ १ २ ३ २ १ २ ३ १ २र
तेन्द्रं वृधन्तो अध्वरे। अच्छावभृथमोजसा ॥ ७॥
१ २उ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १
अहमिद्धि पितुष्परि मेधामृतस्य जग्रह। अहए
२र ३ १ २ ३ २ ३ १ २
सूर्य्य इवाजनि ॥८॥ रेवतीर्नः सधमाद इन्द्रे स-
३ १ २ १ २ ३ २ ३ १ २ १
न्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम ॥ ९ ॥ सो-
२ ३ १ २ ३ १ २ ३ १ ३ २ ३
मः पूषा च चेततुर्विश्वासाए सुक्षितीनाम् । देव-
२ ३क २र ३ २
त्रा रथ्योर्हिता॥ १०॥ इति द्वितीयप्रपाटकस्य द्वि-
तीयार्द्धे प्रथमा दशतिः।

अथ द्वितीयप्रपाटकस्य द्वितीयार्द्धे द्वितीया दशतिः
३ १ २ ३ १ २ ३ १ २ ३ १ २र ३
पान्तमा वो अन्धस इन्द्रमभि प्र गायत । विश्वा
१ २ ३ १ २ ३ १ २ ३ २ ३ २
साहए शतक्रतुं मएहिष्टं चर्षणीनाम्॥ १ ॥ प्र व
१ २ ३ १ २ ३ १ २ १ २
इन्द्राय मादनए हर्य्यश्वाय गायत । सखायः सो
३ १ २ ३ २ ३ ३ १ २ ३ १ २ ३ २ ३
नपाव्ने ॥ २ ॥ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः
१ २ १ २ ३ १ २ १ २ ३
सखायः। कण्वा उक्थेभिर्जरन्ते ॥ ३ ॥ इन्द्राय

१ २ ३१ २र ३ १ २ ३ १ २
मद्वने सुतं परि ष्टोभन्तु नो गिरः। अर्कमर्चन्तु
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
कारवः ॥ ४ ॥ अयं त इन्द्र सोमो निपूतो अधि
३ १ २ १ २ ३२उ ३ १ २ ३ २
वर्हिषि। एहीमस्य द्रवा पिब ॥ ५ ॥ सुरूपकृत्नु
३ १ २ ३१ २ ३ १ २ ३ २ ३ १ २
मूतये सुदुघामिव गोदुहे। जुहूमसि द्यविद्यवि ६
१ २ २ ३ २ ३ १ २ ३ १ २ ३
अभि त्वा वृषभा सुते सुतꣳ सृजामि पीतये। तृ
१ २ ३ १ २ १ २ ३ १
म्पा व्यश्नुही मदम् ॥ ७ ॥ य इन्द्र चमसेष्वा सो
२र ३ १ २ ३ २ १ २र ३ १ २ १
मश्चमूषु ते सुतः। पिबेदस्य त्वमीशिषे ॥ ८ ॥ यो
२ ३ १ २ ३ १ २ १ २ ३ १ २
गे योगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्र
३ १ २ २उ ३ १ २ ३ १ २ ३ १ २र
मूतये ॥ ९ ॥ आ त्वेता नि षीदतेन्द्रमभि प्र गा
१ २ ३ १ २
यत। सखायः स्तोमवाहसः ॥ १० ॥

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः।

अथ द्वितीयप्रपाठस्य द्वितीयार्द्धे तृतीया दशतिः

५१ २र ३ १ २ २ ३ २
इदꣳ ह्यन्वोजसा सुतꣳ राधानां पते। पिबा त्वा
१ २ ३ १ २र ३ १ २ ३
३स्य गिर्वणः ॥ १ ॥ महाꣳ इन्द्रः परश्च नो महि
१ २ ३ १ २ १ २र ३ १ २र १
त्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः ॥ २ ॥ ओ

२र ३ १ २ ३ २ ३ १ २र ३
तू न इन्द्र क्षुमन्तं चित्रं ग्राभꣳ सं गृभाय । म-
१ २र ३ १ २र ३ १ २
हाहस्ती दक्षिणेन ॥३॥ अभि प्र गोपतिं गिरेन्द्र-
३ १ २ ३ २ ३ २ ३ २ ३ १ २
मर्च यथा विदे । सूनुꣳ सत्यस्य सत्पतिम् ॥ ४॥
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
कया नश्चित्र आ भुवदूती सदावृधः सखा ।
२ ३ १ २ ३ २ १ २ ३ २ ३
कया शचिष्ठया वृता ॥ ५॥ त्यमु वः सत्रासाहं
१ २ ३ १ २ १ २ ३ १ २
विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥ ६॥
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ २
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं
३ १ २ २ ३ १ २ ३ २ ३ २उ
मेधामयासिषम् ॥ ७॥ये ते पन्था अधो दिवो
३क २र ३ १ २ ३ १ २ ३ १ २
येभिर्व्यश्वमैरयः । उत श्रोषन्तु नो भुवः ॥ ८॥
३ १ २ ३ २ ३ २ ३ १ २ १ २ ३
भद्रं भद्रं न आ भरेषमूर्जꣳशतक्रतो । यदिन्द्र मृ
१ २ २ ३ १ २ ३ २ ३ १
डयासि नः ॥ ९॥ अस्ति सोमो अयꣳ सुतः पि-
२र ३ १ २ ३ २ ३ १ २ ३ १ २
बन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥ १०॥

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे द्वितीयादशतिः।
अथ द्वितीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थदशतिः ।
३ १ २ ३ ३ २ १ २ ३ १ २र ३ १
इद्ध्यन्नोरपस्युव इन्द्रं जातमुपासते । वन्वाना-

२ ३ १ २ १ २ ३ १
सः सुवीर्य्यम् ॥ १ ॥ न कि देवा इनीमसी न क्या
२र ३ १ २ ३ १
योपयामसि । मन्त्रश्रुत्यं चरामसि ॥२ ॥ दोषो
२र ३ १ २ ३ १ २ ३ २ ३ १
आगाद्बृहद्गा द्युमद्गामन्नाथर्वण।स्तुहि देवं
२ ३ १ २ ३ २ ३ १ २र ३क २र ३
सवितारम्॥ ३ ॥ एषो उषा अपूर्व्या व्युच्छति प्रि
२ ३ २ ३ २ २ ३ २ १ २
या दिवः । स्तुषे वामश्विना बृहत् ॥ ४ ॥ इन्द्रो
३ २ ३ १ २ ३ १ २र ३ १ ३ ३
दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नव
१ २र २उ ३ १ २र ३ १ २ ३ १ २
तीर्नव॥५॥इन्द्रेहि मत्स्यन्धसो विश्वेभिः । सोमपर्व-
३ १ २ ३ १ २र १ २र
भिः ।महां अभिष्टिरोजसा॥६॥ आ तू न इन्द्र वृत्र
३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
हन्नस्माकमर्द्धमा गहि । महान्महीभिरूतिभि. ॥७॥
२ ३ १ २ ३ २र ३ १ २ २ ३
ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत् । इन्द्र
१ ३ १ २ ३ १ २ ३ १ २ ३ १ २
श्चर्मेव रोदसी ॥ ८ ॥ अयमु ते समतसि कपोत
३ २ २ ३ १ २ २ ३
इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ ९ ॥ वात
१ २ ३ २ ३ १ २ ३ १ २ ३ २ २ ३ १
आ वातु भेषजं शम्भु मयोभु नो हृदे । प्र न आ
३
यूंषि तारिषत् ॥ १० ॥

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थी दशतिः
अथ द्वितीयप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः

१ २र ३ १२ १ १२ ३१ २ ३ २ २
यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्य्यमा । न
३ १ २ ३ १२ १२उ ३ १२ ३
किः स दभ्यते जनः ॥ १ ॥ गव्यो षु णो यथा पु
२ ३ १ २र ३ २ ३ २ ३ १ २ २
राश्वयोत रथया । वरिवस्या महोनाम् ॥ २ ॥ इ
१ २ ३ १२ ३ १ २ ३ १२ ३ २
मास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एना
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
मृतस्य पिप्युषीः ॥ ३ ॥ अया धिया च गव्यया
२र १ २र ३ १ २
पुरुणामन् पुरुष्टुत । यत्सोमेसोम आभुवः ॥ ४ ॥
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १
पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं
२ ३ १ २ २ ३ १ २ र ३ २उ ३
वष्टु धियावसुः ॥ ५ ॥ क इमं नाहुषीष्वा इन्द्रं
१ २ २ ३ १ ३ १ २
सोमस्य तर्पयात् । स नो वसून्या भरात् ॥ ६ ॥
१ २ ३ २उ ३ २ ३ २ ३ १ ३ २
आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्
२उ ३ १ २ ३ १ २ १ २ ३ १ २र
एदं बर्हिः सदो मम ॥ ७ ॥ महि त्रीणामवरस्तु
३ २ ३ १ २ ३ २ ३ २ ३ १ २
द्युक्षं मित्रस्यार्यम्णः दुराधर्षं वरुणस्य ॥ ८ ॥
१ २ ३ १ २ २ १
त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मसि स्था-

तर्हरीणाम् ॥ ९ ॥

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः

अथ तृतीयप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः

१ २ ३ १ २ ३ १ २र १
उ त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः । अ
२ ३ १ २ १ २ ३ १ २ ३ २उ
व ब्रह्मद्विषो जहि ॥ १ ॥ गिर्वणः पाहि नः सुतं
३ १ २ २ ३ १ २ ३ १ २र
मधो र्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥ २ ॥
१ २ ३ २ ३ १ २ ३ २उ ३ १ २र ३ २ २ ३
सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् । नः दे
२ ३ २उ ३ १ २ १ २ ३ १ २
वो वृतः शूर इन्द्रः ॥ ३ ॥ आ त्वा विशन्त्विन्दवः
३ १ २ ३ १ २ २उ ३ १ २
समुद्रमिव सिन्धवः । न त्वा मिन्द्राति रिच्यते ॥ ४ ॥
२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ २ ३
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं
१ २ १ २ ३ १ २ ३ १
वाणीरनूषत ॥ ५ ॥ इन्द्र इषे ददातु न ऋभुक्ष
२ ३ २ ३ २ ३ १ २ ३ १ २
णमृभुं रयिम् । वाजी ददातु वाजिनम् ॥ ६ ॥
१ २ ३ २ ३ २ ३ २ ३ १ २र २उ
इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् । स हि
३ १ २र २ १ २ ३ १ २ ३ १
स्थिरो विचर्षणिः ॥ ७ ॥ इमा उ त्वा सुतेसुते न
२ ३ १ २ १ ३ ३ २उ ३ १ २
क्षन्ते गिर्वणो गिरः । गावो वत्सं न धेनवः ॥८॥

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ १
इन्द्रा नु पूषणा वयꣳ सख्याय स्वस्तये । हुवेम
१ २ १ २ ३ १ २र ३ १
वाजसातये ॥ ९ ॥ न कि इन्द्र त्वदुत्तरं न ज्या-
२र २ ३ २उ ३ २
यो अस्ति वृत्रहन् । न क्येवं यथा त्वम् ॥ १० ॥
इति तृतीयप्रपाठकस्य प्रथमार्द्धे प्रथमदशतिः ।
अथ तृतीयप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः ।
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २
तरणिं वो जनानां त्रदं वाजस्य गोमतः । समान-
३ १ २ १ २ ३ २ ३ २
मु प्र शꣳसिषम् ॥ १ ॥ असृग्रमिन्द्र ते गिरः प्र-
३ १ २र ३ १ २ ३ १ २र
ति त्वामुदहासत । सजोषा वृषभं पतिम् ॥ २ ॥
३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २ ३ २उ
सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा । मित्रा-
३ १ २ २ ३ १ २ ३ २ ३ १
स्पान्त्यद्रुहः ॥ ३ ॥ यद्वीडाविन्द्र यत्स्थिरे यत्प-
२र ३ १ २ १ २ ३ १ २र
र्शाने पराभृतम् । वसु स्पार्हं तदा भर ॥ ४ ॥
३ १ २ ३ १ २ ३ १ २र ३ २ ३ २
श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आशि-
३ १ २ ३ २ १ २ ३ १ २ ३ १ २
षे राधसे महे ॥ ५ ॥ अरं त इन्द्र श्रवसे गमेम
३ १ २ १ २ ३ १ २ ३ १
शूर त्वावतः । अरꣳ शक्र परेमणि ॥ ६ ॥ धाना-
२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
वन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रात-

२ ३ १ २र ३ १ २ ३ १ २ ३
जुषस्व नः ॥ ७ ॥ अपां फेनेन नमुचेः शिर इ-
१ २ २ ३ १ २र ३ १ २ ३ १
न्द्रोदवर्तयः । विश्वा यदजय स्पृधः ॥ ८ ॥ इमे
२ ३ १ २ ३ २ ३ २ ३ १ २ १ २
त इन्द्र सोमाः सुतासो ये च सोत्वाः । तेषां म-
१ २ ३ २ ३ १ २ ३
त्स्व प्रभूवसो ॥ ९ ॥ तुभ्यं सुतासः सोमाः स्ती-
२ ३ १ २ १ ३ १ २
र्णं वर्हिर्विभावसो स्तोतृभ्य इन्द्र मृडय ॥ १० ॥
इति तृतीयप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः।
अथ तृतीयप्रपाठकस्य प्रथमार्द्धे तृतीयादशतिः।
३ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम् ।
१ २ ३ १ २ १ २ ३
मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥ अतश्चिदिन्द्र न
१ २र ३ १ २ ३ २ ३ १ २
उपा याहि शतवाजया । इषा सहस्रवाजया॥२॥
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आ बुन्द वृत्रहा ददे जातः पृच्छाद्वि मातरम् ।
२ ३ १ २र ३ १ २
क उग्राः के हा शृण्विरे ॥ ३ ॥ वृबदुक्थं हवा-
१ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
महे सृप्रकरस्नमूतये । साधः कृण्वन्तमवसे ॥ ४ ॥
३ २ ३ १ २ ३ १ २ ३ २ ३
ऋजुनीती नो वरुणो मित्रो नयति विद्वान् । अ-
२ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३
र्यमा देवैः सजोषाः ॥ ५ ॥ दूरादिहेव यत्सतोऽरु-

२ ३ १ २ २ ३२ ३ १ २
णप्सुरशिश्रितत् । वि भानुं विश्वथातनत् ॥ ६ ॥
१ २ ३ १ २र २ ३
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा
१ २ ३ ३ २ ३ २ ३ २ ३ १
रजाꣳसि सुक्रतू ॥ ७ ॥ उदु त्ये सूनवो गिरः का-
२ ३ १ २ ३ १ २ ३ १ २र
ष्ठा यज्ञेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥ ८ ॥
३ २उ ३ १ २ ३ १ २र ३ २ १ २
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढम
३ २
स्य पाꣳसुले ॥ ९ ॥

इति तृतीयप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः ।
अथ तृतीयप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः ।
१ २ ३ १ २ ३ २ ३ १ २र ३ २
अतीहि मन्युषाविणꣳ सुषुवाꣳसमुपेरय । अस्य
३ २ ३ १ २ २ ३ १ २ ३ १ २र ३
राती सुतं पिब ॥ १ ॥ कदु प्रचेतसे महे वचो दे-
१ २ १ २र ३ १ २ ३ २
वाय शस्यते । तदिध्यस्य वर्धनम् ॥ २ ॥ उक्थं
३ २ ३ १ २ ३ १ २ ३ १ २र १ २ ३
च न शस्यमानं नागो रयिरा चिकेत । न गाय-
२ ३ १ २ १ २ ३ २ ३ १ २ ३ १
त्रं गीयमानम् ॥ ३ ॥ इन्द्र उक्थेभिर्मन्दिष्ठो वा-
२ ३ १ २ १ २ १ २ ३ १ २
जानां च वाजपतिः । हरिवांत्सुतानाꣳ सखा ॥ ४ ॥
२ ३ १ २ ३ १ २र ३ १ २ ३
आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः । म-

१ २३ १२ ३ १ २ ३ १
हा३ इव युवजानिः ॥ ५ ॥ कदा वसो स्तोत्रं३
२र ३ १ २र ३१ २३ २ ३२ ३२ ३
हर्यत आ अव श्मशो रुधद्वाः । दीर्घं३ सुतं वा-
१ २ १ २ ३ १२ ३ २ ३ १
ताप्याय ॥ ६ ॥ ब्राह्मणादिन्द्र राधसः पिबा सो-
२ ३१ २र २३२ ३ १ २र ३१
ममृतूंरनु । तवेदं३ सख्यमस्तृतम् ॥ ७ ॥ वयं
२ ३ १ २ ३ १ २ १ २
घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो
१२ ३१ २र ३
जिन्व सोमपाः ॥ ८ ॥ एन्द्र पृक्षु कासु चिन्नृम्-
२ ३१२ १ २ ३ १ २
ण तनूषु धेहि नः । सत्राजिदुग्र पौंस्यम् ॥ ९ ॥
३ १ २र ३२३१ २र ३२ ३ २ ३२ ३
एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते
२ ३ १२
राध्यं मनः ॥ १० ॥

इति तृतीयप्रपाठकस्य प्रथमार्द्धे चतुर्थीदशतिः ।
अथ तृतीयप्रपाठकस्य प्रथमार्द्धे पञ्चमीदशतिः ।

३ १ ३ १ २ ३१ २ १२
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशा-
३ १ २र ३२ ३ १ २ ३१ २
नमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥१॥
१ २र ३ १ २र ३ १ २ ३ २
त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां
३१ २ ३ १ २३ २ ३ १ २ ३ १ २
वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २ ॥

३ १ २र ३ १ ३ २ १ २ ३ १ २ ३ १ १
अभि प्र व. सुराधसमिन्द्रमर्च यथा विदे । यो
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति३
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः । अभि-
३ १ २र ३ २ ३ १ २ ३ १ २
वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ४॥
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १
तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गा-
२र ३ १ २ ३ २ ३ २उ ३ २ ३ १ २
यन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥५॥
१ २ ३ १ २ ३ २ ३ १ २ ३ २ २ ३
तरणिरित्सिषासति वाजं पुरन्ध्या युजा । आ व
१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
इन्द्रं पुरुहूतं नमे गिरा नेमिंतष्टेव सुद्रुवम् ॥६॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
३ १ २ ३ १ २ ३२ १ २ ३
आपिर्नो बोधि सधमाद्ये वृधे३ऽ स्मा२ऽऽअवन्तु ते
१ २ २उ ३ १ २ ३ २उ ३ १ २ १
धियः॥७ त्व२ हेहि चेरवे विदा भगं वसुत्तये। उ-
२ ३ १ २ ३ २ ३ १ २
द्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ८॥
१ २र ३ २ ३ १ २र ३ १ २ ३
न हि यश्चरमं च न वशिष्टः परिमंसते । अ-
१ २ १ २ ३ १ २ ३ २उ ३ १ २ ३ १
स्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामि-

२ १ २३१ २र ३१२ ३ १ २
नः ॥ ९ ॥ मा चिदन्यद्वि शꣳसत सखायो मा रि-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र २ १
षण्यत। इन्द्रमित्स्तोता वृषणꣳसचा सुते मुहुरुक्था
२
च शꣳसत ॥ १० ॥ इति तृतीयप्रपाठकस्य प्रथ
मार्द्धे पञ्चमदशतिः।

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे प्रथम-दशतिः।

२ ३१ २र ३ २३१२३१२ २३
न किष्टं कर्मणा नशद्यश्चकार सदावृधम्। इन्द्रं
२ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ २र
न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ १
य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः। स-
२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
न्धाता सन्धिं मघवा पुरूवसुर्निष्कर्त्ता विह्रुतंपुनः॥२॥
१ २ ३ २ ३ २ ३ २ ३ १ २र ३ १ २ १
आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये। ब्र-
२ ३ १ २ ३ २ ३ १ २ ३ १ २
ह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये॥३॥
२ ३ १ २ ३ १ २ ३ २ ३ १ २ २ ३
आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। मा त्वा
२ ३ १ २ ३ २उ ३ २उ २ ३ १ २ ३ १ २
के चिन्नियेमुरिन्न पाशिनोऽति धन्वेव ताꣳइहि॥४॥
२ ३ २ २र ३ २ २ ३ १ २ २उ ३
त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम्। न त्वद-

१ २ ३ २३ १२ ३ १ २
न्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः॥ ५ ॥
१ २ ३ १ २ ३ १ २र ३ १ २ २ ३
त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः । त्वं वृ-
१ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥६॥
२ ३ २ ३ १ २ ३ १ २ ३क २र ३ २ १ २ ३
इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे । इन्द्रꣳसमी-
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
के वनिनो हवामह इन्द्रं धनस्य सातये॥७॥ इमा उ
३ १ २ ३ १ २र ३ १ २ ३
त्वा पुरूवसो गिरो वर्द्धन्तु या मम । पावकवर्णाः
१ २ ३ २ ३ १ २र २ ३ १
शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥८॥ उदु त्ये
२र ३ २ ३ १ २ ३ १ २
मधुमत्तमा गिर स्तोमास ईरते । सत्राजितो ध-
३ १ २र ३ २ ३ १ २ १ २
नसा अक्षितोतयो वाजयन्तो रथा इव ॥९॥ यथा
३ २ ३ २ ३ २उ ३ १ २र ३ १
गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् । आपित्वे
२ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
न प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिव॥१०॥

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे प्रथम दशति ।
अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।
३ २ १ २ ३ २ ३ १ २ ३ १ २ २
शग्ध्यूषु शचीपत इन्द्र विश्वाभिरूतिभि । भ-

३ १ २र-३१२ ३२३१२ ३ १२
गं नहि त्वा यशसं वसुविदमनु शूर चरामसि॥१॥
१ २३२३१ २३क२र३ १२ ३
या इन्द्र भुज आभरः स्वर्वां असुरेभ्यः । स्तो-
२३१२ ३२३२३१२
तारमिन्मघवन्नस्य वर्द्धय ये च त्वे वृक्तबर्हिषः२
२३२३२३ १ २३क२र ३२
प्र मित्राय प्रार्य्यम्णो सचथ्यमृतावसो । वरूथ्ये३
१२३ २३ १२ ३१ २र
वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥३॥
३ १ २ ३१२ ३ २३ १ २ ३१२ ३
अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः । समी
१ २३२३१२ ३१ २ ३२
चीनास ऋभवः समस्वरन् रुद्रा गृणन्तपूर्व्यम् ४
२३ १२ ३ १ २र३ १२ ३१ २
प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रं हन
३ २ ३१२३१२ ३१२ २
ति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ५ ॥ बृ-
१ २र ३१२ ३१२ २३२ ३
हदिन्द्राय गायत मरुतो वृत्रहन्तमम् । येन ज्योति
१२ ३१२ ३२ ३२३ १२ २
रजनयन्नृतावृधो देवं देवाय जागृवि ॥ ६ ॥ इ-
३ १ २ ३ १ २ ३२ ३२ ३ १२ १
न्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा । शि-
२ ३१ २ ३१२ ३१ २र
क्षाणो अस्मिन् पुरुहूत यामनि जीवा ज्योतिर-

१ २ ३ १२ ३ १ २
धीमहि ॥ ७ ॥ मा न इन्द्र परा वृणग्भवा नः स-
३ १ २ १ २ ३ २उ ३ २ ३ १ २
धमाद्ये । त्वं न ऊती त्वमिन्न आप्यं मा न इ-
३ १ २ ३ १ २ ३ १ २ ३ २
न्द्र परावृणक् ॥ ८ ॥ वयं घ त्वा सुतावन्त आ-
३ २ ३ १ २ ३ १ २ ३ १ २ ३
पो न वृक्तबर्हिषः । पवित्रस्य प्रस्रवणेषु वृत्रहन्
१ २ ३ १ २ १ २ ३ १ २ ३ १
परि स्तोतार आसते ॥ ९ ॥ यदिन्द्र नाहुषीष्वा
२र ३ १ २ ३ १ २ २ ३ १ २ ३ २ ३
ओजो नृम्णं च कृष्टिषु । यद्वा पञ्च क्षितीनां द्यु-
१ २र ३ १ २र ३ १ २
म्नमा भर सत्रा विश्वानि पौंस्या ॥ १० ॥

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे तृतीय दशतिः

३ २ ३ १ २र ३ १ २ ३ २ २३क २र
सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता। वृषा ह्यु-
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
ग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ १ ॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
यच्छक्रासि परावति यदर्वावति वृत्रहन् । अतस्त्वा
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति२
३ २ २ ३१ २र ३ १ १ ३ २ ३ १ २र
अभि वो वीरमन्धसो मदेषु गायगिरा महा विचेत-

२३ २१ १२ ३ २३२३ १२
सम्। इन्द्रं नाम श्रुत्यँ शाकिनं वचो यथा॥३॥
१२ ३१२ ३२३१२ ३१३ ३१२
इन्द्र त्रिधातु शरणं त्रिवरूथँ स्वस्तये। छर्दिर्य-
३१२ ३१२ ३१२ ३१२
च्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः॥४॥
१२ ३२३१ २र १२
श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत। वसूनि
३१ २र३१२३१२३१ २र
जातो जनिमान्योजसा प्रति भागं न दीधिमः॥५॥
३३१२ ३१२र ३१२ १२३
न सीमदेव आप तदिषं दीर्घायो मर्त्यः। एतग्वा
३१ २र ३१२३२३१२३१२ २
चिद्य एतशो युयोजत इन्द्रोहरी युयोजते॥६॥ आ
३१२३२३१२ ३१२ २३१
नो विश्वासु हव्यमिन्द्रँ समत्सु भूषत। उप ब्र-
२३१२ ३१.२
ह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ७
१२र ३२उ ३१२ ३२ ३२
तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम्। सत्रा
२र ३१२ ३१२३१२
विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते८
१२र३१२ ३२ ३२३१२ १२
क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः। अलर्षि
३१२३१ २
युध्म खजकृत्पुरन्दरप्रगायत्रा अगासिषुः॥ ९॥

२ १ २ ३ १ २ २ ३ २ ३ १ २ १ २
वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् । तस्मा उ
२ १ २ २ ३ २ ३ २ ३ १ २ ३ २
अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १० ॥
इति तृतीयप्रपाठकस्य द्वितीयार्द्धे तृतीय-दशतिः ।
अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थ-दशतिः ।
१ २ ३ ३ २ ३ ३ १ २ ३ १ २ १ २
यो राजा चर्षणीनां याता रथेभिरध्रिगुः । विश्वा-
३ १ २ २ ३ २ ३ २ ३ ३ २ ३ २
सां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ १ ॥
१ २ ३ १ २ ३ १ २ ३ १ २ १ २
यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवं
३ २ ३ ३ १ २ १ २ ३ २ ३ ३ १ २ २
छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि २
१ २ ३ १ २ २ ३ १ २ ३
वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् । द्र-
२ ३ २ ३ १ २ २ ३ २ ३ १ २ ३ १ २
प्सः पुरांभेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥३॥
२ ३ १ २ ३ १ २ ३ १ २ ३
बण्महाँ असि सूर्य्य बडादित्य महाँ असि । म-
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि४
३ २ ३ १ २ ३ ३ ३ १ २ ३ १ २ ३
अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा । श्वा-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २
त्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ५

१ २र ३ २ ३ १ २र ३ २ १ २
यद्याव इन्द्र ते शतंॅशतं भूमीरुत स्युः। नत्वा व
३ २३ २३ २३ २ ३ १ २ ३ १ २
ज्रिन्त्सहस्रंॅसूर्य्या अनु न जातमष्ट रोदसी ॥६॥
१ २ ३ २उ ३ १ २क २र ३ २ ३ १ २ २ २
यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः । सिमा
३ १ २र ३ २ ३ १ २ ३ १ २
पुरू नृपूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ ७ ॥
१ २र ३ १ २र ३ १
कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति। श्रद्धा हि
२र १ १ २ ३ २ ३ १ २र
ते मघवन् पार्य्ये दिवि वाजी वाजंॅसिषासति॥८॥
१ २ ३ २ ३ १ २र ३ १ २ ३ १
इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः । हित्वा
२र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शिरो जिह्वया रारपच्चरत्त्रिंॅशत्पदा न्यक्रमीत्॥९
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः। आश-
३ १ २ ३ १ २ ३ १ ३ १ २
न्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः॥१०॥

इति तृतीयप्रपाठकस्य द्वितीयार्द्धे चतुर्थ-दशतिः।

अथ तृतीयप्रपाठकस्य द्वितीयार्द्धे पञ्चम दशतिः।

३२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
इत ऊती वो अजरं प्रहेतारमप्रहितम्। आशु जे-
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
तारंॅहेतारंॅरथीतममतूर्तं तुग्रियावृधम्॥ १ ॥

१ २र ३ १ २ ३ २उ ३ १ २र ३
मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्। आ-
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
रात्ताद्वा सधमादं न आगहीह वा सन्नुप श्रुधि॥२॥

३ १ २ ३ १ ३ ३ २ ३ १ २ ३ १ २ १ २
सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे। पचता
३ १ २र ३ २उ ३ १ २र ३ १ २र
पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः॥३॥
१ २ ३ १ २र ३ २ ३ १ २ ३ २ १
यः सत्राहा विचर्षणिरिन्द्रं तꣳ हूमहे वयम्। स-
२ ३ १ २ ३ १ २ ३ २
हस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे॥४॥
१ २ ३ २ ३ १ २ १
शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम्। मा
२ ३ १ २र ३ २ ३ २उ ३ १ ३ २ ३ २
वाꣳ रातिरुपदसत्कदाचनास्मद्रातिः कदाचन॥५॥
३ २ ३ १ २ ३ १२ ३ १ २ ३ १ २ १
यदा कदा च मीढुषे स्तोता जरेत मर्त्यः। आ-
२र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
दिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम्॥६॥
३ १ २र ३ ३ १ १ २ १
पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे। यः
२र ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
संमिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः॥७॥
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ २र ३ १
उभयꣳ शृणवच्च न इन्द्रो अर्वागिदं वचः। सत्रा-

२ ३ २ ३ १ २ ३ १ २र ३ १ २
च्या मघवान्तसोमपीतयेधिया शविष्ठ आ गमत् ८
३ २ ३ १ २ ३ १ २ ३ १ २ २ ३
महे च न त्वाद्रिवः परा शुल्काय दीयसे। न स-
१ २ ३ १ २र ३ २ ३ १ २
हस्राय नायुताय वज्रिवो न शताय शतामघ ॥९॥
१ २ ३ २ ३ २र ३ १ २ ३ १
वस्याँइन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः। माता
२ ३ १ २ ३ २ ३ १ २
च मे छदयथः समा वसो वसुत्वनाय राधसे॥१०॥
इति तृतीयप्रपाठकस्य द्वितीयार्द्धे पञ्चम-दशतिः।
अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे प्रथम-दशतिः।
३ १ २र ३ १ २ ३ १ २ १
इम इन्द्राय सुन्विर सोमासो दध्याशिरः। ताँ
२र ३ २ ३ १ २ ३ १ १
आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ १
३ १ २ ३ १ २ २ ३ १ २ ३ १ २ १
इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः। म-
२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
धोःपपानउपनोगिरः शृणु रास्वस्तोत्राय गिर्वणः २
१ २ १ २ ३ १ २ ३ १ २ ३ १ २ १
आ त्वांद्य सबर्दुघाँ हुवे गायत्रवेपसम्। इ-
२ ३ २ ३ २ ३ १ ३ १ २ ३ १ २ ३ १ २
न्द्र धेनुं सुदुघामन्यामिषमुरुधारामरं कृतम्॥३॥
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः। यच्छि-

२र ३ १ २र ३ २ ३ २ ३ १ २र
क्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते४ो
१ २ ३ २उ ३ १ २. ३ १ २र ३ १
क ईं वेद सुते सचा पिबन्तं कद्वयो दधे । अयं
२र ३ १ २र ३ २ ३ १ २
यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः॥५
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
यदिन्द्र शासो अव्रतं च्यावया सदसस्परि । अ-
१ २ ३ १ २ ३ १ २.३ २ ३ १ २
स्माकमꣳशुं मघवन् पुरुस्पृहं वसव्ये अधिबर्हय६
१ २ ३ २ ३ १ २ ३ २ ३ १ २ २ १ २ ३
त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । पु-
१ २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
त्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः॥७
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपे-
२र २ ३ २उ ३ १ २ ३ १ २
न्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते॥८॥
३ १ २र ३ १ २ ३ १ २३ ३
युंक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः । अर्वा-
१ २ ३ १ २ ३ २ ३. २ ३ १ २
चीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि९
२ ३ १ २र ३ १ २ १
त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः । स
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि॥१०॥
इति चतुर्थप्रपाठकस्य प्रथमार्द्धे प्रथम-दशतिः ।

अथ चतुर्थ प्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः
१ २ ३ २ १ २ ३ २ ३ २ १ २
प्रत्यु आदर्श्यायत्यू३च्छन्ती दुहिता दिवः । अपो
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी॥१॥
३ १ २ ३ १ २ ३ १ २ ३
इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना । अ-
१ २ ३ १ २ ३ १ २ ३ १ २र
यंत्रामह्वेऽवसेशचीवसू विशंविशꣳहि गच्छथः॥२॥
२ ३ १ २ ३ १ २ ३ १ २
कु ष्ठः को वामश्विना तपानो देवा मर्त्यः ।
३ १ २ ३ १ २र ३ २ ३ २ ३ २ ३ १
घ्नता वामश्नया क्षपमाणोऽꣳशुनेत्थमु आद्वन्य-
२ ३ २ ३ १ २ २ ३उ ३ १ २
था ॥ ३ ॥ अयं वां मधुमत्तमः सुतः सोमो दिवि
१ २ ३ १ २ ३ १ २र
ष्टिषु । तमश्विना पिबतं तिरोअह्न्यं धत्तꣳ रत्ना-
३ १ २ २ ३ १ २ ३ १ २ ३ २ ३ १ २
नि दाशुषे ४ आ त्वा सोमस्य गल्दया सदा याच
३ १ १ २ ३ १ २र ३ २ २र
न्नहं ज्या । भूर्णिं मृगं न सवनेषु चुक्रुधं क इशा-
३ १ २ १ २ ३ २ ३ २उ ३ १ २
नं याचिषत्॥५॥अध्वर्यो द्रावया त्वꣳ सोममिन्द्रः
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
पिपासति । उपो नूनं युयुजे वृषणा हरी आ च
३ २ ३ २ ३ २उ ३ २३ १ २
जगाम वृत्रहा ॥६॥ अभी षतस्तदा भरेन्द्र ज्यायः

१ २ ३ १२ १ २ ३ १ २ ३ १ र १
क्रनीयसः पुरूवसुर्हि मघवन् बभूविथ भरे भरे च
१ २ १ २ ३ १ २ ३ १ ३ १ २ ३ १ २र ३
हव्यः ॥७॥ यदिन्द्र यावत स्त्वमेतावदहमीशीयस्तो-
२ ३ १ २ ३ १ २ ३ १ २
तारमिद्दधिषे रदावसो न पापत्वाय रंप सिष-
१२ ३ १ २ ३ १ २र ३ १ २
मू८ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
३ १ २ ३१ २३१२ ३ १ २ ३ ३ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य्य तरुष्यतः
१ २र ३ १ २र ३ १ २र ३ १ २
॥९॥ प्रयो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
१ ३ ३ १ २ ३ १ २ ३ २ ३ १ २
न त्वाविव्याच रज इन्द्र पार्थिवमति विश्वं वव
क्षिथ१० ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः ।

अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः ।

१ २ ३ १ २र ३ २ ३क २र ३ १ २ ३ १
असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनु-
२ १ २ ३ १ २र
षेमुवोच । बोधामसि त्वा हर्य्यश्व यज्ञै र्बोधा
३ २ ३ १ २ ३ १ २ १ २ ३ १ २
न स्तोममन्धसो मदेषु ॥ १ ॥ योनिष्ट इन्द्र सदने
३ १ २र ३ १ २ २ ३ १
अकारि तमा नृभिः पुरूहूत प्र याहि । असो य-
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
था नोऽविता वृधश्चिद्द ददो वसूनि ममदश्च सोमैः

१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १
॥ २ ॥ अदर्दरुत्समसृजो वि खानि त्वमर्णवान्-
२ ३ १ २ ३ १ २ ३ १ २ ३ २उ
बद्बधानाꣳ अरम्णाः । महान्तमिन्द्र पर्वतं वियद्वः
३ १उ ३ २ ३ १ २ ३ २ ३ १ २
सृजद्वारा अव यद्दानवान् हन् ॥ ३ ॥ सुष्वाणास
३ १ २ ३ १ २ ३ १ २
इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम्
१ २ ३ १ २र ३ २उ ३ १ २
। आ नो भर सुवितं यस्य कोना तना त्मना
३ १ २ ३ २ ३ १ २ ३
सह्याम त्वोताः ॥ ४ ॥ जगृह्मा ते दक्षिणमिन्द्र
१ २ ३ १ २ ३ १ २ ३ २उ ३
हस्तं वसूयवो वसुपते वसूनाम् । विद्मा हि त्वा
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १
गोपतिꣳ शूर गोना मस्मभ्यं चित्रं वृषणꣳ रयिं
२ २ ३ १ २ ३ १ २ ३ १ २र
दाः ॥ ५ ॥ इन्द्रं नरो नेमधिता हवन्ते यत्पार्या
३ १ २ ३ २ ३ २ २ ३ १ २ ३ १ २ ३ २
युनजते धियस्ताः । शूरो नृपाता अवसश्च का-
३ १ २र ३ १ २ ३ १ २ २र १ २
मआ गोमति व्रजे भजा त्वं नः ॥ ६ ॥ वयः सु
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
पर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः
१ २ ३ १ २ ३ २ ३ १ ३२ ३ २ २ ३
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्या३स्मान्नि-
१ २ ३ २ १ २ ३ २उ ३ १ ३र
धयेव बद्धान् ॥ ७ ॥ नाके सुपर्णमुप यत्पतन्तꣳ

३ १ ५ २र ३ १ २ १ २ ३ १ २
हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरु-
३ २ ३ २ ३ १ २ ३ १ २ ३ २
णस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ८ ॥
१ २ २ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो
३ १ २ २ ३क २र ३ १ २ ३ २ ३ २
वेन आवः। स वुध्न्या उपमा अस्य विष्ठाः सत-
३ २ ३ १ २ ३ १ २ १ २ ३ १ २
श्च योनिमसतश्च विवः ॥ ९ ॥ अपूर्व्या पुरुतमा
१ २ ३ ३ १ २ ३ १ २ ३ १ २ ३ १ २
न्यस्मै महे वीराय तवसे तुराय। विरप्शिने
३ २ ३ १ २ ३ १ २ ३ १ २
वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः
॥ १० ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे तृतीया-दशतिः।
अथ चतुर्थप्रपाठकस्य प्रथमार्द्धे चतुर्थ दशति।

१ २ ३ १ २ ३ १ २ ३ २ ३ २
अव द्रप्सो अंशुमतीमतिष्ठ दीयानः कृष्णो
३ १ २ ३ १ २ २ ३ २उ ३ २ ३ १ २ ३
दशभिः सहस्रैः। आवत्तमिन्द्रः शच्या धमन्त
२ ३ १ २ ३ १ २ ३ २ ३ १ २
मप स्नीहितिं नृमणा अधद्राः ॥ १ ॥ वृत्रस्यत्वा
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
श्वसयादीपमाणा विश्वे देवा अजहुर्ये सखा
३ १ २ २ १ २ ३ २ ३ २उ ३ १
यः। मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृ-

२ १ १ २३ १ २र
तना जयासि ॥ २ ॥ विधुं दद्राणꣳ समने ब-
३ १ २र ३ १ २ २ १ २ ३ १ २
हूनां युवानꣳ सन्तं पलितो जगार । देवस्य प-
३ १ २ ३ २उ ३ २ ३ १ २र
श्य काव्यं महित्वाद्या ममार स ह्यः समान ॥३
२ ३ २ ३ २ ३ १ २ ३ १ २ ३
त्वꣳ ह त्यत्सप्तभ्यो जायमानो ऽशत्रुभ्यो अभवः
१ २ ३ १ २र ३ १ २र ३ २
शत्रुरिन्द्र । गूढे द्यावापृथिवी अन्वविन्दो विभुम-
३ १ २ ३ १ २ ३ १ २र ३
द्भ्यो भुवनेभ्यो रणं धाः ॥ ४ । मेडिं न त्वा व-
१ २ ३ १ २ ३ १ २ ३ २ ३ १
ज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभꣳ स्थिर-
२ ३२उ ३ १ २ ३ १ २र ३ १
प्स्नुम् करोष्यर्य्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं
२ ३ १ २ १ २ ३१ २३ १ २
वृत्रहणं गृणीषे ॥ ५ ॥ प्र वो महे महेवृधे भ-
३ १२ ३ १ २ ३ १ २ १ २ ३
रध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् । विशः पू-
१ २र ३ २ ३१ २ ३१
र्वीः प्र चर चर्षणिप्राः ॥ ६ ॥ शुनꣳ हुवेम मघ-
२ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३१
वानमिन्द्र मस्मिन् भरे नृतमं वाजसातौ । शृण्-
२ ३ १ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं ध-
२ २ ३ १ २ ३ १ २ ३ १
नानि ॥ ७॥ उ दु ब्रह्माण्यैरत श्रवस्येन्द्रꣳ समर्य्ये

२ . १ २र ३ १ २ ३ १ २
महया वशिष्ठ। आ यो विश्वानि श्रवसा ततानो
३ २ ३ १ २ ३ १ २ ३ १ २र
पश्रोता म ईवतो वचा४ँसि ॥ ८ ॥ चक्रं यद-
३ १ २र ३ १ २र ३ १ २र
स्याप्स्वा निषत्त मुतो तदस्मै मध्विच्चद्यात्।
३ १ २र ३ १ ३ २ ३ १ २र ३ १ २
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओष-
धीषु ॥ ९ ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

अथ चतुर्थ प्रपाठकस्य प्रथमार्द्धे पञ्चमदशतिः।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्यमू षु वाजिनं देवजूत४ँ सहोवानं तरुतार४ँ
१ २ १ २ ३ १ २ ३ २ ३ २ ३
रथानाम्। अरिष्टनेमिं पृतनाजमाशु४ँ स्वस्तये
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
तार्क्ष्यमिहा हुवेम ॥ १ । त्रातारमिन्द्रमवितार-
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ ३ १
मिन्द्र४ँ हवेहवे सुहव४ँ शूरमिन्द्रम्। हुवे नु शक्रं
२ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २ १ १
पुरुहूतमिन्द्रमिद४ँहविर्मघवा वेत्विन्द्रः ॥ २ ॥ य-
२ ३ २ ३ १ २ ३ १ २ ३ २ १ २
जामह इन्द्रं वज्रदक्षिण४ँ हरीणा४ँ रथ्या३ं विव्र-
१ २र ३ १ २ ३ १ २ ३ १ २र
तानाम्। प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्विसे ना
३ १ २ ३ १ २र ३ २ ३ १ २ ३
भिर्भयमानो वि राधसा ॥ ३ ॥ सत्राहणं दाधृषिं

२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ २ ३ २
तुम्रमिन्द्रं महामपारं वृषभ५ सुवज्रम् । हन्ता यो
३ १ २र ३ २उ ३ १ २ ३ १ २ ३ १ २ ३
वृत्र५ सनितोत वाजं दाता मघानि मघवा सु-
१ २ १ २ ३ १ २ ३ १ ३ २ ३ १ २
राधाः ॥ ४ यो नो मनुष्यन्नभिदाति मर्त्त उगणा
३ १ २ ३ १ २ ३ २ ३ १ २र ३
वा मन्यमानस्तुरो वा । क्षिधी युधा शवसा वा
१ २ ३ १ २ ३ २ २ २ ३ १ २
तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥ ५ ॥ यं वृत्रेषु
३ २ ३ १ २ ३ ३ ३ १ २ ३ १ २ ३ १ २ १
क्षितय स्पर्धमाना य युक्तेषु तुरयन्तो हवन्ते य५
२र ३ २ ३ १ २र ३ १ २र ३ १ २ ३ १
शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स
२र १ २ ३ १ २र ३ २उ ३
इन्द्रः ॥ ६ ॥ इन्द्रापर्वता बृहता रथेन वामीरिष
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
आ वहत५ सुवीराः । वीत५ हव्यान्यध्वरेषु देवा
१ २ ३ १ २र ३ १ २ १ २ ३ २ ३
वर्द्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥ इन्द्राय गिरो
१ २ ३ १ २र ३ १ २ ३ १ २ १
अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् । यो
२र ३ २ ३ १ २ ३ १ २ ३ १ २ ३
अक्षेणेव चक्रियौ शचीभि- र्विष्वक्तस्तम्भ पृथि-
२ ३ २ २ ३ १ २ ३ १ २
वीमुत द्याम् ॥ ८ ॥ आ त्वा सखायः सख्या ववृत्यु
३ २ ३ १ २ ३ १ २ ३ १ २र ३ १
स्तिरः पुरू चिदर्णवां जगम्याः । पितुर्नपातमा

२१ ३२ ३ १ २र ३ १ २र
दधीत वेधा अस्मिन् क्षये प्रतरां दीद्यानः ॥ ९ ॥
२ ३१ २ ३२उ २३३ १२ ३
को अद्य युंक्ते धुरि गा ऋतस्य शिमीवतो भा-
१२ ३ २ ३१२ ३१२ ३१
मिनो दुहृणायून् । आसन्नेषामप्सुवाहो मयोभू-
३ २र ३२ ३२३१ २
न्य एषां भृत्यामृणधत्स जीवात् ॥ १० ॥

इति चतुर्थप्रपाठकस्य प्रथमार्द्धे पञ्चम-दशतिः ।

१२ ३ १ २र ३२३१२ ३१
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्मा-
२ ३२क १२ २३
णस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥ इन्द्रं
१२ ३१२ ३ १२ ३१२
विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमं
३२३ १ २ ३ १ २ ३ १ २ ३ १ २
रथीनां वाजानां सत्पतिं पतिम् ॥ २ ॥ इममि
३१ २३ २ ३१२ ३ १२ ३ १ २ ३क
न्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य त्वा-
२र ३ १ २ ३ २३ १२ १ २
भ्यक्षरन् धारा ऋतस्य सादने ॥ ३ ॥ यदिन्द्र चि
३२उ ३ १ २ २ ३ २ २
त्र म इह नास्ति त्वादातमद्रिवः । राधस्तन्नो वि
२ ३ १ २ ३ १ २र ३
दद्वस उभयाहस्त्या भर ॥ ४ ॥ श्रुधी हवं तिर
२उ ३ १ २ ३ १२ ३१ २ ३ १ २
श्चा इन्द्र यस्त्वा सपर्यति । सुवीर्यस्य गोमतो

३ १ २ ३ १ २ १ २ ३ १ २
रायस्पूर्धि महा॑ᳲ असि ॥ ५ ॥ असावि सोम इ-
३ १ २ ३ १ २ १ २
न्द्र ते शविष्ठ धृष्णवा गहि । आ त्वा पृणक्त्वि-
३ २उ ३ २ ३ २ ३ १ २ १ २ ३
न्द्रियᳲ रजः सूर्यो न रश्मिभिः ॥ ६ ॥ एन्द्र याहि
१ २ ३ २ ३ १ २ ३ २ ३ १ ३ २ ३ १
हरिभिरुप कण्वस्य सुष्टुतिम् । दिवो अमुष्य शा-
२ ३ १ २ ३ १ १ २ २ ३ १ २
सतो दिवं य यदिवा वसो ॥ ७ ॥ आ त्वा गिरो
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
रथीरिवास्थुः सुतेषु गिर्वणः । अभि त्वा समनू-
३ १ २ ३ २उ ३ १ २ २ ३ २ ३
षत गावो वत्सं न धेनवः ॥ ८ ॥ एतो न्विन्द्रᳲ
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १
स्तवाम शुद्धᳲ शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वा
२ ३ २ ३ १ २ २ ३ १ २ ३ १
ᳲसᳲ शुद्धैराशीर्वान्ममत्तु ॥ ९ ॥ ओ रयिं वो रयि-
२ ३ ३ ३ २ ३ १ २ १ २ ३ १ २र ३
न्तमो यो द्युम्नैर्द्युम्नवत्तमः । सोमः सुतः स इन्द्र
१ २ ३ १ २
तेऽस्ति स्वधापते मदः ॥ १० ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे प्रथम-दशतिः ।

अथ चतुर्थाध्याय आरभ्यते ।

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशति
१ २ ३ १ २ ३ १ २ ३ १ २ ३
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरङ्ग

२ ३ २ ३१ २ ३ १ २ १ २
माय उग्मयेऽपश्चादघ्वने नरः ॥ १ ॥ आ नो वयो-
३ २ ३१ २ ३ २ ३ १ २ ३ २
वयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विनेष्ठाम् ।
३ २उ ३ १ २ २ ३ २३ २३ १
उग्रं वचो अपावधीः ॥ २ ॥ आ त्वा रथं यथोत
२ ३ १ २ ३ १ २ ३ २ ३ १ २
ये सुम्नाय वर्त्तयामसि । तुविकूर्मिमृतीषहमिन्द्रꣳ
३ १ २ २ ३ २ ३ १ २ ३ १
शविष्ठ सत्पतिम् ॥ ३ ॥ स पूर्व्यो महोनां वेनः
२र २ ३ २ ३ १ २ ३ २ ३ २ ३ १
क्रतुभिरानजे । यस्य द्वारा मनुः पिता देवेषु धि-
२ ३ २ २ ३ १ २ ३ २ ३ १ २ ३
य आनजे ॥ ४ ॥ यदी वहन्त्याशवो भ्राजमाना
२ ३ २ १ २ ३ २र ३ २ ३ १ २
रथेष्वा । पिबन्तो मदिरं मधु तत्र श्रवाꣳसि कृ
१ २ ३ १ २ ३ १ २र ३ १
ण्वते ॥ ५ ॥ त्यमु वो अप्रहणं गृणीषे शवसस्प
२ १ २ ३ २ ३ २ ३ १ २ ३ १ २
तिम् । इन्द्रं विश्वासाहं नरꣳ शचिष्ठं विश्ववेदस
३ १ ३ ३ १ २र
म् ॥ ६ ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
वाजिनः । सुरभि नो मुखा करत्प्र न आयूꣳषि
३ २ ३ १ २र ३ १ २उ
तारिषत् ॥ ७ ॥ पुरां भिन्दुर्युवा कविरमितौजा
२ ३ १ २ ३ १ २ ३ २ ३ १
अजायत । इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री

२ १२
पुरुष्टुतः ॥ ८ ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे द्वितीय दशतिः।

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे तृतीय-दशति।

१२ ३ २ ३ १२ ३ १ २ ३ १ २ ३ १
प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे । धिया वो
३ १ २ ३ २३ १ २ ३ १ २
मेधसातये पुरन्ध्या विवासति ॥ १ ॥ कश्यपस्य
३ २३ २ ३ २ ३ २ ३ १ २ २ ३ २ ३ १ २
स्वर्विदो यावाहुः सयुजाविति । ययोर्विश्वमपि
३ २ ३ १ २२ ३ १ २ १ २ ३ १ २
व्रतं यज्ञं धीरा निचाय्य ॥ २ ॥ अर्चत प्रार्चत
३ १ २ ३ १ २ १ २ ३ २ ३ २उ
नरः प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत
३ २ ३क २र ३ १ २र ३ २ ३
पुरमिद्धृष्णवर्चत ॥ ३ ॥ उकथमिन्द्राय शंस्यं
१ २ ३ १ २ ३ १ २र ३ १ २
वर्द्धनं पुरुनिःषिधे । शक्रो यथा सुतेषु णो
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
रारणत्सख्येषु च ॥ ४ ॥ विश्वानरस्य वस्पतिम-
१ ३ १ २ १ २ ३ २ ३ १ २ ३ १
नानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे र-
२ १ ३ १ २ ३ १ २र ३ १
थानाम् ॥ ५ ॥ स घा यस्ते दिवो नरो धिया
२र ३ १ २ ३ १ २र ३ २ ३ २ ३ २र
मर्त्तस्य शमतः । ऊती स बृहतो दिवो द्विषो अंहो

३ १ २ १ १ २ ३ १ २ २
हो न तरति ॥ ६ ॥ विभोष्ट इन्द्र राधसो वि-
२ ३ १ २ १ २ २
भ्वी रातिः शतक्रतो । अथा नो विश्वचर्षणे द्यु-
१ २ १ २ ३ १ २
म्नꣳ सुदत्र मꣳहय ॥ ७ ॥ वयश्चित्ते पतत्रिणो
३ १ २र २ ३ १ २ ३ १ २र ३ १
द्विपाच्चतुष्पादर्जुनि । उषः प्रारन्नृतूꣳरनु दिवो
२र ३ १ २ ३ १ २र३ २ ३ २ ३
अन्तेभ्यस्परि ॥ ८ ॥ अमी ये देवा स्थन मध्य
१ २ ३ २ ३ २ १ २ ३ २उ ३ २ ३ २ ३ २ ३
आ रोचने दिवः । कद्व ऋतं कदमृतं का प्रत्ना व
१ २ २ ३ १ २ ३ २ ३
आहुतिः ॥ ९ ॥ ९ ॥ ऋचꣳ साम यजामहे याभ्यां
१ २ ३ १ २ १ २र ३ २ ३
कर्माणि कृण्वते । वि ते सदसि राजतो यज्ञं दे-
१ २
वेषु वक्षतः ॥ १० ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे तृतीय-दशतिः ।

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे चतुर्थ-दशतिः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं
३ १ २ ३ १ २ २ ३ १ २ ३ २ ३ १ २ ३ १
जजनुश्च राजसे । क्रत्वे वरे स्थेमन्यामुरीमुतोग्र-
२र ३ १ २ ३ १ २ १ २
मोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ अत्ते दधामि ४

३ १ २ ३ २उ ३ २उ ३ १ २ ३ २ ३ २ ३२उ
प्रथमाय मन्यवेऽहन्यद्दस्युं नर्य्यं विवेरपः । उभे
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
यत्वा रोदसी धावतामनु भ्यसात्ते शुष्मात् पृथि-
१ २ ३ २ ३ १ ३ १ २ ३ १ २
वी चिदद्रिवः ॥ २ ॥ समेत विश्वा ओजसा पतिं
३ २उ ३ १ २र ३ १ २ ३ २ १
दिवो य एक इद्भूरतिथिर्जनानाम्। स पूर्व्यो नू-
२र ३ १ २ ३ १ २ ३ १ २र ३ २ ३ २
तनमाजिगीषं तं वर्त्तनीरनु वावृत एक इत् ॥ ३ ॥
३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि
२उ ३ १ २ ३ २ ३ १ २
प्रभूवसो । न हि त्वदन्यो गिर्वणो गिरः सघत्
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १
क्षोणीरिव प्रति तद्धर्य्य नो वचः ॥ ४ ॥ चर्षणीधृ-
२ ३ १ २ ३ २ २ ३ १ २ ३ २ ३क २र
तं मघवानमुक्थ्या३मिन्द्रं गिरो बृहतीरभ्यनूषत।
३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २ ३
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दि-
१ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३
वेदिवे ॥ ५ ॥ अच्छा व इन्द्रं मतयः स्वर्युवः स-
२ ३ १ २ ३ १ २ १ २ ३ १ २ ३
ध्रीचीर्विश्वा उशतीरनूषत । परि ष्वजन्त जनयो
२ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
यथा पतिं मर्य्यं न शुन्ध्युं मघवानमूतये ॥ ६ ॥
१ २उ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता

१ २ ३ २ २ ३ १ ३ २ ३ १ २ ३ १ २
वस्वो अर्णवम्। यस्य द्यावो न विचरन्ति मानु-
३ १ २र ३ १ २र २उ
षं भुजे मꣳहिष्ठमभि विप्रमर्चत ॥ ७ ॥ त्यꣳ सु
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
मेषं महया स्वर्विदꣳ शतं यस्य सुभुवः साकमीर-
२ ३ १ २र ३ १ ३ ३ ३ १ २
ते। अत्यं न वाजꣳ हवनस्यदꣳ रथमेन्द्रं ववृ-
३ १ २ ३ १ २ ३ १ २ ३ १ २
त्यामवसे सुवृक्तिभिः ॥ ८ ॥ घृतवती भुवनाना-
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
मभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावा-
३ १२ २र ३ १ २ ३ १ २ ३ २ ३ १ २
पृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरि-
२ १ २र ३ १ २ ३ २ ३ १
रेतसा ॥ ९ ॥ उभे यदिन्द्र रोदसी आपप्राथोषा
२ ३ १ २ ३ १ २ ३ १ २ ३ २
इव। महान्तं त्वा महीनाꣳ सम्राजं चर्षणीनाम्।
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनम् ॥ १०॥
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निर-
२ ३ १ २ १ २ ३ १ २ ३ १ २ ३ १
हन्नृजिश्वना। अवस्यवो वृषणं वज्रदक्षिणं मरु-
२ ३ १ २
त्वन्तꣳ सख्याय हुवेमहि ॥ ११ ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे चतुर्थ दशतिः।

अथ चतुर्थप्रपाठकस्य द्वितीयार्द्धे पञ्चमद-शतिः।

१ २ ३ २ ३ १ २ ३ १ २ ३उ ३क १ २
इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्। विदे
१ २ ३ १ २ ३ २ १ २ ३ १
वृधस्य दक्षस्य महा२ँ हि षः॥१॥ तमु अभि प्र
२र ३ १ २ ३ २ १ २ ३ १ २ ३ १ २र
गायत पुरुहूतं पुरुष्टुतम्। इन्द्रं गीर्भिस्तविषमा वि-
२ ३ १ २ ३ १ २ ३ १ २ ३ २
वासत॥२॥ तं ते मदं गृणीमसि वृषणं पृक्षु सासहि-
३ १ २ ३ १ २ १ २र
म्। उ लोककृत्नुमद्रिवो हरिश्रियम्॥३॥ यत्सोम-
३ १ २ ३ १ २ ३ २ ३ २ १ २ ३ २
मिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये। यद्वा मरु-
३ १ २ ३ १ २र २ ३ १ २ ३ १ २
त्सु मन्दसे समिन्दुभिः॥४॥ एदु मधोर्मदिन्त-
३ १ २ ३ १ २ १ २उ ३ १ २र
२ँ सिञ्चाध्वर्यो अन्धसः। एवा हि वीर स्तवते
३ १ २ २ ३ १ २ ३ १ २
सदावृधः॥५॥ एन्दुमिन्द्राय सिञ्चत पिबाति
३ १ २र १ २र ३ २
सोम्यं मधु। प्र राधा२ँसि चोदयते महित्वना॥६॥
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
एतो न्विन्द्रं२ँ स्तवाम सखाय स्तोम्यं नरम्। कृ-
१ २र ३ २उ ३ २ १ २ ३
ष्टीर्यो विश्वा अभ्यस्त्येक इत्॥७॥ इन्द्राय
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३
साम गायत विप्राय बृहते बृहत्। ब्रह्मकृते विप-

१ २ ३ १ २ २उ ३ २ ३ १ २ ३ २ ३ १ २
श्रिते पनस्यवे ॥ ८ ॥ य एक इद्विदयते वसु मर्त्ता-
३ १२ १ २ ३ १ २ ३ १ २ ३ २
य दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ९ ॥
१ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे । स्तुष ऊ
२ ३ १ २ ३ १ २
षु वो नृतमाय धृष्णवे ॥ १० ॥

इति चतुर्थप्रपाठकस्य द्वितीयार्द्धे पञ्चम दशतिः।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे प्रथम दशतिः।

३ १ २र ३ १ २ ३ २ ३ १ २ १ २र
गृणे तदिन्द्र ते शव उपमां देवतातये। यद्धꣳसि
३ १ २र २ ३ १ २र ३ २ ३
वृत्रमोजसा शचीपते ॥ १ ॥ यस्य त्यच्छम्बरं मदे
१ २ ३ १ २ ३ १ २र ३
दिवोदासाय रन्धयन्। अयꣳ स सोम इन्द्र ते सु-
१ २र १ २ ३ १ २
तः पिब ॥ २ ॥ एन्द्र नो गधि प्रिय सत्राजिदगो
३ २उ ३ १ २ ३ १ २र ३ २
ह्य । गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३ ॥
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
य इन्द्र सोमपातमो मदः शविष्ठ चेतति । येना
२ ३ १ २ ३ १ २ ३ १ २र ३ २उ
हꣳसि न्यात्रिणं तमीमहे ॥ ४ ॥ तुचे तुनाय तत्सु
३ १ २ ३ १ २ ३ १ २ १ २
नो द्राघीय आयुर्जीवसे । आदित्यासः सुमहसः

२ १ २      २ ३ १ २र ३ १ २    ३
कृणोतन ॥ ५ ॥ वेत्था हि निर्ऋतीनां वज्रहस्त परि
१ २   १ २   ३ १   २ ३ १ २     १
वृजम् । अहरहः शुन्ध्युः परिपदामिव ॥ ६ ॥ अ-
२र ३ २ ३   २ ३ १ २     ३ २   १ २
पामीवामप स्त्रिधमप सेधत दुर्मतिम् । आदित्या-
३ १ २   ३ १ २     २ ३   १ २
सो युयोतना नो अꣳहसः ॥ ७ ॥ पिबा सोममि-
२ १ २   ३ १ २ ३ १ २   ३ १ २   ३ २
न्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः । सोतु-
३ २ ३   १ २ ३ १ २
र्बाहुभ्याꣳ सुयतो नार्वा ॥ ८ ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे प्रथम-दशतिः ।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वितीय दशतिः ।

३   २ ३ १   ३र     ३ १ २   ३ १ २
अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनाद-
३ १ २ ३ १ २     १   २ ३ १ २
सि । युधेदापित्वमिच्छसे ॥ १ ॥ यो न इदमिदं
३ १   २र   ३ २ ३ १ २     १ २ ३
पुरा प्र वस्य आनिनाय तमु व स्तुषे । सखाय
१ २ ३ १ २    १   २ ३ १   २   ३ १ २
इन्द्रमूतये ॥ २ ॥ आ गन्ता मा रिषण्यत प्रस्था-
३ १ २      २ १ २
वानो माप स्थात समन्यवः । दृढा चिद्यमयिष्णवः ॥३॥
१   २ ३ २उ ३ १ ३   २   ३ १ २ ३ १ २    १ २
आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते । सोमꣳ

१ २ ३ २ ३ १ २र
सोमपते पिब ॥ ४ ॥ त्वया ह स्विद् युजा वयं प्रति
३ १ २ ३ १ २र ३ १
श्वसन्तं वृषभ ब्रुवीमहि । स᳘ꣳस्थे जनस्य गोमतः ॥५॥
१ २ ३क २र ३ २ ३ १ २
गावश्चिध्वा समन्यवः सजात्येन मरुतः सबन्धवः ।
३ १२ ३ १ २ ३ २ १ २ ३ १ २ ३ १
रिहते ककुभो मिथः ॥ ६ ॥ त्वं न इन्द्रा भर ओ-
२ ३ १ २ २ ३ १ २ ३
जो नृम्ण᳘ꣳ शतक्रतो विचर्षणे । आ वीरं पृतना-
१ २ २ ३क २र ३ १ २ ३ १ २
सहम् ॥ ७ ॥ अधा हीन्द्र गिर्वण उप त्वा काम
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ १
ईमहे संसृग्महे । उदेव ग्मन्त उद्भिः ॥ ८ ॥ सो
२ ३ २ ३ २ ३ १ २ ३ १ २ ३२ ३ १ २
दन्तस्ते वयो यथा गोश्री ते मधौ मदिरे विवक्ष-
३ १ २र ३ २ ३ १
णो । अभि त्वामिन्द्र नोनुमः ॥ ९ ॥ वयमु त्वा-
२ ३ २उ ३ १ २ ३ १ २ १ २ ३
मपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वज्रिं चि-
१ २
त्र᳘ꣳ हवामहे ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे द्वितीय-दशति ।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे तृतीय-दशति ।

२ २ ३ १ २ ३ २र ३ १ २ ३क २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्य्यः ।

१ २र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वी-
१ २ ३ १ २ ३ १ २उ ३ २उ ३
रनु स्वराज्यम् ॥ १ ॥ इत्था हि सोम इन्मदो
१ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३
ब्रह्म चकार वर्द्धनम् । शविष्ठ वज्रिन्नोजसा पृथि-
१ २र ३ २ ३ २ ३ १ २ ३ १ १ ३
व्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ २ ॥
३ ३ १ २ ३ १ २ ३ १ २र २उ
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः । तमि-
३ २ ३ ३ ३ १ २र ३ १ २र ३ १ ३
न्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नो-
२ ३ २ ३ १ २ ३ १ ३ ३क २र
ऽविषत्॥३॥इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्य्यम्
३ ३ २ ३ १ ३ ३ २उ ३ २ ३ १ १र ३ २
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीर-
३ १ २ ३ १ २ २ ३ १ २ ३ ३उ
चन्ननु स्वराज्यम् ॥ ४ ॥ प्रेह्यभीहि धृष्णुहि
३ २ ३ १ २ १ २ ३ २उ ३ २
न ते वज्रो नि यंसते । इन्द्र नृम्णं हि ते श-
३ १ २ ३१ २र ३ २ ३ १ २ ३ १ २
वो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ५ ॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ १
यदुदीरत आजयो धृष्णवे धीयते धनम् । युङ्क्ष्वा
२ ३ २ ३ २ ३ २उ १ ३ १ २र ३ १ ३ ३
मदच्युता हरी कं हनः कं वसौ दधोऽस्मां इन्द्र
१ २ २ ३ १ २ ३ १ २ ३ १
वसौ दधः ॥ ६ ॥ अक्षन्नमीमदन्त ह्यव प्रिया

२ १ २ ३ १ २ ३ २ ३ १ २
अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया
३ २उ ३क २र ३ १ २ २ ३ १ २ ३
मती योजा न्विन्द्र ते हरी ॥ ७ ॥ उपो षु शृणु-
२उ ३ १ २ ३ १ २ ३ १ ३ १२
ही गिरो मघवन्मातथा इव । कदा नः सूनृता-
३ २३ २३१२ ३ २उ ३क २र ३ १ २
वतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ८ ॥
३ १ २ ३ २ १ २र ३ १ २ ३ २ १
चन्द्रमा अप्स्वाऽन्तरा सुपर्णो धावते दिवि । न
२ ३ १ २ ३ १ २
वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे
३ १ २ १ २ ३ १ २ ३ २ ३ १ २
अस्य रोदसी ॥ ९ ॥ प्रति प्रियतमꣳ रथं वृषणं
३ १ २ ३ १ २ १ २ ३ १ २
वसुवाहनम् । स्तोता वामश्विनावृषि स्तोमेभि-
३ २ ३ २ ३ १ २ ३ १ २
र्भूषति प्रति माध्वी मम श्रुतꣳहवम् ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे तृतीय-दशतिः ।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे चतुर्थ-दशतिः ।

१ २ ३ १ २ ३ १ २ २ ३
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध
२ ३ १२ ३ २ ३ १ २ ३ १ २र ३ २
स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृ-
३ १ २ १ २र ३ १ २
भ्य आ भर ॥ १ ॥ आग्निं न स्ववृक्तिभिर्होतारं त्वा
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २

३ १ १ ३ १ २ ३ २ ३ १ २ ३ १ ३
वृणीमहे । शीरं पावकशोचिषं वि वो मदे यज्ञेषु
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
स्तीर्णबर्हिषं विवक्षसे ॥ २ ॥ महे नो अद्य बोध-
१ २ ३ २ ३ १ २ १ २ ३ १ २
योषो राये दिवित्मती । यथा चिन्नो अबोधयः
३ १ २ ३ १ २र ३ १ २ ३ २
सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥ भद्रं
३ १ २ ३ २ ३ १ २ ३ १ २र १ २
नो अपि वातय मनो दक्षमुत क्रतुम् । अथा ते
३ १ २र ३ २ ३ २ ३ २ ३ २ ३ १ २र ३
सख्ये अन्धसो वि वो मदे रण। गावो न यवसे
१ २ १ २ ३ १ २ ३ २ ३ १
विवक्षसे ॥ ४ ॥ क्रत्वा सहा९ अनुष्वधं भीम आ
२र ३ १ २ १ २ ३ १ २ ३ ३ ३ २ ३ १
वावृते शवः । श्रिय ऋष्व उपाकयोर्नि शिप्री
२र ३ १ २ ३ १ २ ३ २ २ ३ १
हरिवां दधे हस्तयोर्वज्रमायसम् ॥ ५ ॥ स घा तं
२र ३ २ ३ १ २ ३ १ २ १ २र
वृषण९रथमधि तिष्ठाति गोविदम् । यः पात्र९
३ २ ३ १ २ ३ १ २ ३ २ ३क २र ३
हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते
१ २ १ २र ३ २उ ३ २ ३ १ २र
हरी ॥ ६ ॥ अग्निं तं मन्ये यो वसुरस्तं यं यन्ति
३ १ २ ३ ३ १ २ ३ २उ ३ १ २ ३
धेनवः । अस्तमर्वन्त आशवोऽस्तं नित्यासो वा-
२ ३ १ २ ३ २ ३ १ २ २उ ३
जिन इष९ स्तोतृभ्य आ भर ॥ ७ ॥ न सम९हो

१ २ ३१ ३१ ३२ ३ १ २ ३ १ २ १ १ २
न दुरितं देवासो अष्ट मर्त्यम् । सजोषसो यम-
१ २ ३ १ ३२ ३ १ २ ३ २ ३ १ २
र्यमा मित्रो नयति वरुणो अति द्विषः ॥ ८ ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे चतुर्थदशतिः ।

अथ पञ्चमप्रपाठकस्य प्रथमार्द्धे पञ्चमदशतिः ।

२ ३ २ ३ १ २ ३ २ ३ १ ३ १
परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भ-
२र २ ३ १ २र ३ १ २ ३ १ २
गाय ॥ १ ॥ पर्य्यु षु प्र धन्व वाजसातये परि
३ १ २ २ १ २ ३ १ ३ १ २ ३ १ २
वृत्राणि सक्षणिः। द्विषस्तरध्या ऋणया नईरसे ॥२॥
१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १
पवस्व सोम महांत्समुद्रः पिता देवानां विश्वाभि
२र १ २ ३ १उ ३ २ ३ २
भि धाम ॥ ३ पवस्व सोम महे दक्षायाश्वो न
३ २ ३ १ २र १ २ ३ २ ३
निक्तो वाजी धनाय ॥ ४ ॥ इन्दुः पविष्ट चारु
१ २ ३ २ ३ १ १ २ ३ १ २र २ ३ १ २
र्मदायापामुपस्थे कविर्भगाय ॥ ५ ॥ अनु हि त्वा
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
सुतꣳ सोम मदामसि महे समर्य्यराज्ये । वाजाꣳ
३ १ २ ३ १ २ १ ३क २र ३ २ ३
अभि पवमान प्र गाहसे ॥ ६ ॥ क ईं व्यक्ता नरः
१ २ ३ २ ३ २ ३ २ ३ १ २ २ ३
सनीडा रुद्रस्य मर्य्या अधा स्वश्वाः ॥ ७ ॥ अग्ने

२३ २ ३ २उ ३ २३ २ ३१ २ ३१ २
तमद्याश्वं न स्तोमैः क्रतुं न भद्रं॰ हृदिस्पृशम् ।
३ १ २ ३ १ २ ३ १ २ ३ १ २र
ऋध्यामा त ओहैः ॥ ८ ॥ आविर्मर्या आ वाजं
३ १ २ ३१२ ३२ ३२ ३ १
वाजिनो अग्मं देवस्य सवितुः सवम् । स्वर्गाँ॰
२ ३ १२ ३ १ २३ २
अर्वन्तो जयत ॥ ९ ॥ पवस्व सोम द्युम्नी सुधारो
३ १ २र३ १ २ ३ २
महाँ॰ अवीनामनु पूर्व्यः ॥ १० ॥

इति पञ्चमप्रपाठकस्य प्रथमार्द्धे पञ्चम दशतिः ।

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे प्रथम-दशतिः ।

१ २ ३ १ २ ३ १ २३१२ ३ १२
विश्वतोदावन् विश्वतो न आ भर यं त्वा शवि
३ १ २ ३२३२उ ३ १ ३ २ ३ १ २
ष्ठमीमहे ॥ १ ॥ एष ब्रह्मा य ऋत्विय इन्द्रो नाम
३ २ ३ २ ३२ ३ १ २ ३१२ ३ १
श्रुतो गृणे ॥ २ ॥ ब्रह्माण इन्द्रं महयन्तो अर्क-
२र ३ १ २ ३ २ ३ १ २ १ २ ३ २३१
रवर्द्धयन्नहये हन्तवा उ ॥ ३ ॥ अनवस्ते रथम
२ ३२ ३ १२ ३१२
श्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४ ॥
२ ३२३१ २३ २३ १ २र ३१ २ ३
शं पदं मघं॰ रयीषिणे न काममव्रतो हिनोति
१ २ ३ २ २३ २ ३ १ २ ३ १
न स्पृशद्रयिम् ॥ ५ ॥ सदा गावः शुचयो विश्व-

२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
धायसः मुद्रा देवा अरेपसः ॥ ६ ॥ आ याहि व-
२ ३ १ २र ३ १ २र
नसा सह गावः सचन्त वर्त्तनिं यदूधभिः ॥ ७ ॥
१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे
१ २ ३ २ ३ १ २ ३ १ २र
त इन्द्र ॥ ८ ॥ अर्चन्त्यर्कं मरुतः स्वर्का आस्तो
३ २उ ३ १ २र २ ३ १ २
भति श्रुतो युवा स इन्द्रः ॥ ९ ॥ प्र व इन्द्राय
३ १ २ ३ १ २ ३ १ २ ३ २ ३१ २
वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते
॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे प्रथम दशतिः ।
अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे द्वितीय-दशतिः ।

१२ ३ १ २र ३ २उ ३ १ २
अचेत्यग्निश्चिकितिर्हव्यवाड्न सुमद्रथः ॥ १ ॥
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क
अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरू
२र २ ३ २ ३ २ ३ २ ३ २ ३ १ २ १
थ्यः ॥२॥ भगो न चित्रो अग्निर्महोनां दधाति र-
२ १ २ ३ १ ३ ३ २ ३ १ २र ३ २
त्नम् ॥३॥ विश्वस्य प्र स्तोभ पुरो वा सन् यदि वेह
३ २ ३ २उ ३ २ ३ २ ३ १ २
नूनम् ॥ ४ ॥ उषा अप स्वसुष्टमः सं वर्त्तयति
३ १ २ ३ १ २ ३ २उ ३ १ २
वर्त्तनि ँ सुजातता ॥ ५ ॥ इमा नु कं भुवना॰

१ १ २ ३ १ २ ३ २ २ ३ २ ३
सीषधेमेन्द्रश्च विश्वे च देवाः ॥ ६ ॥ वि स्रुतयो
१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २र
यथा पथा इन्द्र त्वद्यन्तु रातयः ॥ ७ ॥ अया वाजं
३ १ २ ३ १ २ ३ १ २ ३ १ २
देवहितꣳ सनेम मदेम शतहिमाः सुवीराः ॥ ८ ॥
३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १
ऊर्जा मित्रो वरुणःपिन्वतेडाः पीवरीमिषं कृणुही
२ २ ३ १ २
न इन्द्र ॥ ९ ॥ इन्द्रो विश्वस्य राजति ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे द्वितीय-दशतिः।

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे तृतीय दशतिः।

१ २ ३ १ २र ३ २ ३ १
त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सो-
२र ३ १ २ ३ १ २ ३ २ १ २ ३
ममपिबद्विष्णुना सुतं यथावशम्। स ईं ममाद
२ ३ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २
महि कर्म कर्त्तवे महामुरुꣳ सैनꣳ सश्चद्देवो देवꣳ
३ १ २र ३ १ २र ३ २ ३ २ ३ १ २
सत्य इन्दुः सत्यमिन्द्रम् ॥ १ ॥ अयꣳ सहस्रमान
३ १ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १
वो दृशः कवीनां मतिर्ज्योतिर्विधर्म। ब्रध्नः समी
२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १
चीरुषसः समैरयदरेपसः सचेतसः स्वसरे मन्युम
२ ३ २ १ २ ३ १ २ ३ २ ३
न्तश्चिता गोः ॥ २ ॥ एन्द्र याह्युप नः परावतो

१ ,२र ३१२ २ १२३२३ १२३ १२
नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्प
१२ ३ १२ ३२उ ३२३ २
तिः । हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न
३२३ १२ ३ १ २३ १२
पितरं वाजसातये मꣳहिष्ठं वाजसातये ॥ ३ ॥
१ २र ३१२ ३२ ३१ २र३१
तमिन्द्रं जोहवीमि मघवानमुग्रꣳ सत्रा दधानम
२ ३ १२ ३१२ १ २ ३१
प्रतिष्कुतꣳ श्रवाꣳसि भूरि । मꣳहिष्ठो गीर्भिरा
२र३१२ ३२३ १२ ३१२
च यज्ञियो ववर्त्त राये नो विश्वा सुपथा कृणोतु
३२ २३१२ १२३ २ ३१ २३
वज्री ॥ ४ ॥ अस्तु श्रौषट् पुरो अग्निं धिया दध
१ २र ३१ २ ३१ २
आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणी
१२ ३ २ ३१२३१२ ३२३१२
महे । यद्ध क्राणा विवस्वते नाभा सन्दाय नव्य
२३ २ ३१ २र ३१२ ३२उ ३
से । अध प्र नूनमुप यन्ति धीतयो देवाꣳ अच्छा
२ ३१२ १ २ ३२ ३१२ ३ १२
न धीतयः ॥ ५ ॥ प्र वो महे मतयो यन्तु विष्ण
३१२ ३१ १३१२ १ २र३१
वे मरुत्वते गिरिजा एवयामरुत् । प्र शर्धाय प्र
२र ३१२ ३१३ ३१२३ १२ ३
यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय
१२ ३२ ३१ २र ३२उ ३
शवसे ॥ ६ ॥ अया रुचा हरिण्या पुनानो विश्वा

१२ ३१२३ २३ २३१२
द्वेषांसि तरति सयुग्वभिः । सूरो न सयुग्वभिः ।
१ २ ३१२ ३ १ २३१ ३र २ ३
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः । विश्वा-
२३१ २३१ ३र ३१ २ ३१ २
यद्रूपा परियास्यृक्वभिः सप्तास्येभिरृक्वभिः ॥ ७ ॥
३ २र ३१ २ ३१२३क२र ३१२३१२
अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि
३१२ ३२३२ ३२३२ ३२उ ३२
सत्यसवं रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्याम
३१ २र ३१२ ३ १२
तिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत
३१२ ३१ २ ३ १ २र ३
सुक्रतुः कृपा स्वः ॥ ८ ॥ अग्निं होतारं मन्ये
१ २३ १२ ३१ २र ३१२ ३ २३ २
दास्वन्तं वसोः सूनुं सहसो जातवेदसं विप्रं न
३१२ ३३१२ ३२ ३२ ३१ २
जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या
३२ ३१३ १२ ३१२ ३१२ ३१
कृपा । घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजु
२ ३१२ ३२१ २र३१ २
ह्वानस्य सर्पिषः ॥ ९ ॥ तव त्यन्नर्यं नृतोऽप इन्द्र
२र ३२ ३१ ३१२ ३२ ३ ३२३
प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् । यो देवस्य
१२३ १ २३ १२ ३२३२ २३ १२ ३१
शवसा प्रारिणा असु रिणन्नपः । भुवो विश्वमभ्य
२३१२ ३१ २र ३१२ ३१ २र
देवमोजसा विदे दूर्जं शतक्रतुर्विदेदिषम् ॥ १० ॥

इति पञ्चमः प्रपाठकस्य द्वितीयार्द्धे तृतीय-दशति ।

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे चतुर्थ दशति ।

१ १ २ ३ १ ३२ ३ १ २र ३ २उ
उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रꣳ
३ २ ३ १ २ १ २ ३ १ ३ ३ १ २
शर्म महि श्रवः ॥ १ ॥ स्वादिष्ठया मदिष्ठया पव
३ १ २ १ २ ३ १ २ ३ २ १ २
स्व सोम धारया । इन्द्राय पातवे सुतः ॥ २ ॥ वृषा
३ १ २ ३ १ २ ३ २ २ ३ १ २
पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधा
३ १ २ २ ३ २ ३ १ २ ३ १ २ ३
न ओजसा ॥ ३ ॥ यस्ते मदो वरेण्यस्तेना पव
१ २ ३ १ २ ३ २ ३ २उ
स्वान्धसा । देवावीरघशꣳसहा ॥ ४ ॥ तिस्रो
३ १ २ ३ १ २ ३ १ २ १ २ ३
वाच उदीरते गावो मिमन्ति धेनवः । हरि रेति
१ २ १ २ ३ १ २ ३ १ २ ३ १ २
कनिक्रदत् ॥ ५ ॥ इन्द्रायेन्द्रो मरुत्वते पवस्व मधु
३ २ ३ १ २ ३ १ २ १ २ ३
मत्तमः । अर्कस्य योनिमासदम् ॥ ६ ॥ असाव्य
१ २र ३ १ २र २ २ ३ २उ ३ १
ꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमा
२ १ २ ३ १ २ ३ १ २ ३ १ २
सदत् ॥ ७ ॥ पवस्व दक्षसाधनो देवेभ्यः पीतये
३ १ २ ३ २ ३ १ २ १ २ ३ १
हरे । मरुद्भ्यो वायवे मदः ॥ ८ ॥ परि स्वानो

२ ३२ ३ २३ १ २ १२ ३१
गिरिष्ठाः पवित्रे सोमो अक्षरत्। मदेषु सर्वधा
२ १२ ३२१ ३२ ३१ ३२ ३क
असि ॥ ९ ॥ परि प्रिया दिवः कविर्वयाऽसि न
२र ३ २ ३ १२ ३ १२
प्त्योर्हितः। स्वानैर्याति कविक्रतुः ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे चतुर्थ-दशतिः।

अथ पञ्चमप्रपाठकस्य द्वितीयार्द्धे पञ्चम दशतिः।

१ २र ३ २३ १२ ३१२ ३२
प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्। सुता
३१२ १ २र १ २३ १
विदथे अक्रमुः ॥ १ ॥ प्र सोमासो विपश्चितोऽपो
२ ३१२ १२ ३१ २ १२
नयन्त ऊर्मयः। वनानि महिषा इव ॥ २ ॥ पव
३ १२ १२ ३१ २ ३२३ १२ २
स्वेन्दो वृषा सुतः कृधी नो यशसो जने। वि
३ २३ १२ २३ १ २ ३ १ २
श्वा अप द्विषो जहि ॥ ३ ॥ वृषा ह्यसि भानुना
३१२ १२ ३१२
द्युमन्तं त्वा हवामहे। पवमान स्वर्दृशम् ॥ ४ ॥
१ २ ३ १२ ३१ २३२ ३२ ३१
इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः। सृज
२र ३१ २ १२ ३२ ३१२ ३१
दश्वं रथीरिव ॥ ५ ॥ असृक्षत प्र वाजिनो गव्या
२र १२ ३१२ ३१ २र
सोमासो अश्वया। शुक्रासो वीरयाशवः ॥ ६ ॥

१ २ २ १ २ ३ १ २र ३ १ २ ३ १
पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः। वायु-
२र ३ १ २ १ २ ३
मा रोह धर्मणा ॥ ७ ॥ पवमानो अजीजनद्दिदि-
२ ३ १ २र ३ २ १ २ ३ २ ३ २
वश्चित्रं न तन्यतुम्। ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २
परि स्वानास इन्दवो मदाय बर्हणा गिरा। मधो
३ १ २ १ ३ १ २ १ २
अर्षन्ति धारया ॥ ९ ॥ परि प्रासिष्यदत्कविः सि
२र ३ १ २र ३ २ ३ १ २र ३ १ २
न्धोरूर्माविधि श्रितः। कारुं बिभ्रत्पुरुस्पृहम् ॥ १० ॥

इति पञ्चमप्रपाठकस्य द्वितीयार्द्धे पञ्चम-दशतिः।

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे प्रथम-दशतिः।

२ ३ १ ३ २ ३ २ ३ १ २ ३ १ २र १ २
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्। इन्दुं
३ १ २ ३ १ २ ३ २उ ३
देवा अयासिषुः ॥ १ ॥ पुनानो अक्रमीदभि विश्वा
२ ३ १ २ ३ २ ३ १ २ ३ १ २
मृधो विचर्षणिः। शुम्भन्ति विप्रं धीतिभिः ॥ २ ॥
३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २र
आविशन् कलशं सुतो विश्वा अर्षन्नभि श्रियः।
३ ३ १ २ १ २ ३ २ ३ १ २
इन्दुरिन्द्राय धीयते ॥ ३ ॥ असर्जि रथ्यो यथा
३ १ २ ३क २र ३ २ १ २ ३ १ २
पवित्रे चम्वोः सुतः। कार्ष्मन् वाजी न्यक्रमीत्

२उ ३ १ २र ३ २ ३ २ ३ १ २
॥ ४ ॥ प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्र
१ २ ३ २उ ३ १ २ ३ १ २
मुः। घ्नन्तः कृष्णामप त्वचम् ॥ ५ ॥ अपघ्नन् प
३ १ २ ३ २ ३ २ ३ १ २र ३ १
वसे मृधः क्रतुवित्सोम मत्सरः। नुदस्वादेवयुं ज
२ ३ १ २ १ १ २ ३ २ ३ २ ३ १ २
नम् ॥ ६ ॥ अया पवस्व धारया यया सूर्य्यमरो
३ १ २र ३ २ १ २ ३ २उ
चयः। हिन्वानो मानुषीरपः ॥ ७ ॥ स पवस्व य
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
आविथेन्द्रं वृत्राय हन्तवे। वव्रिवांसं महीरपः
३ २ ३ १ २र ३ १ २ ३ २ ३ २
॥ ८ ॥ अया वीती परि स्रव यस्त इन्दो मदेष्वा।
३ १ २ ३ १ २र १ २ ३ १ २र ३ २उ
अवाहन्नवतीर्नव ॥ ९ ॥ परि द्युक्षं सनद्रयिं
३ १ २ ३ १ २ ३ १ २ ३ १ ३ २
भरद्वाजं नो अन्धसा। स्वानो अर्ष पवित्र आ ॥१०॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे प्रथम-दशतिः।

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे द्वितीय-दशतिः।
१ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २
अभिक्रन्दद्वृषा हरिर्महान् मित्रो न दर्शतः।
१ २र १ ३ १ ३ ३ २ ३
सं सूर्य्येण दिद्युते ॥ १ ॥ आ ते दक्षं मयोभुवं
१ २ ३ १ २ २ ३ १ २ ३ १ २
वह्निमद्या वृणीमहे। पान्तमा पुरुस्पृहम् ॥ २ ॥

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय।
३ १ २ ३ १ २ २ ३ २ ३ १ २ ३
पुनाहीन्द्राय पातवे ॥ ३ ॥ तरत्स मन्दी धावति
१ २ ३ २र २ ३ २ ३ १ २
धारा सुतस्यान्धसः। तरत्स मन्दी धावति ॥ ४ ॥
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १
आपवस्व सहस्रिणꣳ रयिꣳ सोम सुवीर्य्यम्। अस्मे
२र १ २ ३ १ २ ३ १ २ ३ १
श्रवाꣳसि धारय ॥ ५ ॥ अनु प्रत्नास आयवः पदं
२र ३ १ २ ३ १ २ १ २
नवीयो अक्रमुः। रुचे जनन्त सूर्य्यम् ॥ ६ ॥ अर्षा
३ १ २ ३ १ २र ३ १ २ ३ १ २ ३
सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्। सीदन्योनौ
२ ३ २ १ २ ३ १ २ ३ १ २ २
वनेष्वा ॥ ७ ॥ वृषा सोम द्युमाꣳ असि वृषा देव
१ २ १ २ १ २ ३ १ २ ३
वृषव्रतः। वृषा धर्माणि दध्रिषे ॥ ८ ॥ इषे पवस्व
१ २ ३ १ २ ३ १ २ १ २ २ १
धारया मृज्यमानो मनीषिभिः। इन्दो रुचाभि गा
२र ३ १ २ ३ १ २ ३ १ २
इहि ॥ ९ ॥ मन्द्रया सोम धारया वृषापवस्व दे-
३ २ २ ३ १ २ ३ २ ३ १ २
वयुः। अव्या वारेभिरस्मयुः ॥ १० ॥ अया सोम
३ १ २ ३ २उ ३क २र ३ १ २र
सुकृत्यया महांत्सन्नभ्यवर्धथाः। मन्दान इद्वृषा-
३ १ २र ३ १ २र ३ १
यसे ॥ ११ ॥ अयं विचर्षणिर्हितः पवमान स

२ ३ १ २र ३ २ १ २
चेतति । हिन्वान आप्यं वृहत् ॥ १२ ॥ प्र न इन्दो
३ १ २र ३ १ २र ३ २ ३ २ ३
महे तु न ऊर्मिं न विभ्रदर्षसि । अभि देवा॑ऽ॒ अ-
१ २ ३ १ २ ३ २उ ३ २ ३ १
यास्यः ॥ १३ ॥ अपघ्नन् पवते मृधोऽप सोमो अ-
२ २ ३ १ २ ३ २
राव्णः । गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥

इति षष्ठप्राठकस्य प्रथमार्द्धे द्वितीय दशतिः ।

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे तृतीय-दशतिः ।

१ १ २ ३ १ २ ३ १ २र १ २
पुनानः सोम धारायापो वसानो अर्षसि । आ र-
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः १
२ ३ १ २ ३ २उ ३ १ २ ३ २ ३ २ ३
परीतो पिञ्चता सुत॑ऽ॒ सोमो य उत्तम॑ऽ॒ हविः । दध-
१ २उ ३ २ २उ ३ २ ३ २ ३ १ २
न्वा॑ऽ॒ यो नर्यो अप्स्वाऽ३न्तरा सुषाव सोममद्रि-
१ २ ३ १ २र ३ १
भिः ॥ २ ॥ आ सोम स्वानो अद्रिभिस्तिरो वा-
२र ३ १ २ २ ३ २ ३ २ ३क २र ३ २ ३ २ ३
राण्यव्यया । जनो न पुरि चम्वोर्विशद्धरिः सदो
१ २ १ २ ३ १ २ ३ २ ३ १
वनेषु दध्रिषे ॥ ३ ॥ प्र सोम देववीतये सिन्धुर्न
२ ३ १ २ ३ १ २र ३ १ २र
पिप्ये अर्णसा । अ॑ऽ॒शोः पयसा मदिरो न जागृ-

३२ ३ १ २ ३१ २ १२ ३ २
त्रिरच्छा कोशं मधुश्चुतम् ॥ ४ ॥ सोम उ ष्वाणः
३ २ ३ २ ३ २ ३१ २ १ २ ३ १ २
सोतृभिरधिष्णुभिरवीनाम् । अश्वयेव हरिता या-
३ १ २ ३१ २ ३ १ २ २ ३ १
ति धारया मन्द्रया याति धारया ॥ ५ ॥ तवाह
२ ३ १ २ ३१ २ ३ १ २ ३
सोम रारण सख्य इन्दो दिवेदिवे । पुरूणि बभ्रो
१ २ ३ ३ २र ३ २उ ३ १ २
नि चरन्ति मामव परिधीँरति ताँ इहि ॥ ६ ॥
३ १ २ ३ १ २र ३ २
मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि । रयिं
३ १ २ ३ १ २ ३ २ ३ १ २ ३क २र
पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ७ ॥
३ १ २र ३ २ ३ १ १ ३ २ ३ १ २ ३
अभि सोमास आयवः पवन्ते मद्यं मदम् । समु-
१ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
द्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः॥८॥
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ १
पुनानः सोम जागृविरव्या वारैः परि प्रियः । त्वं
२र ३ १ २ ३ १ २
विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः
१ २ ३ २ ३ १ २ ३ १ २ ३ २
॥ ९ ॥ इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
३ १ २ ३ १ २र ३ १ २ ३ १ २
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः
१ २ ३ १ ३ १ २र ३ १ २
॥ १० ॥ पवस्व वाजसातमोऽभि विश्वानि वार्या ।

१ २३१ २३ २र ३१२ ३ २
त्वᳫ समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः
१२ १ २३२ ३ १ २
॥ ११ ॥ पवमाना असृक्षत रविचमति धारया ।
३१२ ३१ २ ३१ २र ३२ ३१ २र
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयाᳫ
सि च ॥ १२ ॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे तृतीय-दशतिः।

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे चतुर्थ-दशतिः।

१ २र३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अ
१ २र २ ३ १ २ ३ १२ ३२३ १
भि वाजमर्ष । अश्वं न त्वा वाजिनं मर्जयन्तो-
२ ३१ २३१ २ १ २र ३१
ऽच्छा बर्ही रशनाभिर्नयन्ति ॥१॥ प्र काव्यमुश-
३ ३ २ ३२ ३२३ १ २
नेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
१ २ ३ १ २ ३ २ ३१ २३ २ ३क २र ३
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति
१ २ ३१ २र ३ १ २र ३१
रेभन् ॥ २ ॥ तिस्रो वाच ईरयति प्र वह्निर्ऋत-
२ ३ १ २र ३ २ १ २ ३ १
स्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गो
२ ३ १ २ ३ १ २ ३१ २ ३ २
पतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः
३ २ ३२ ३१ २ ३१ २ ३ २ ३२३
॥ ३ ॥ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः

१२ ३ १२ ३२ ३२३ १२ ३१२ ३ २
समपृक्त रसम् । सुतः पवित्रं पर्य्येति रेभन्मि- ते
३ १ २ ३ २ ३ १ २ १ २ ३
व सद्म पशुमन्ति होता ॥ ४ ॥ सोमः पवते जनि
१ २३ १ २ ३२ ३१ २ ३ १ २ ३२ ३
ता मतीनां जनिता दिवो जनिता पृथिव्याः । ज-
१ २र ३ १ २र ३ १ २ ३ १
निताग्नेर्जनिता सूर्य्यस्य जनितेन्द्रस्य जनितोत
२र ३ १ २३१ २र ३ १ २ ३ १
विष्णोः ॥ ५ ॥ अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषि-
२ ३ १ २ २ ३ १ २ ३ १ २ ३ २उ
णमवावशन्त वाणीः । वना वसानो वरुणो न सि-
३ १ २३१ २ ३ १ २ १ २ ३१
न्धुर्वि रत्नधा दयते वार्य्याणि ॥ ६ ॥ आक्रांत्समुद्रः
२३१ २र ३१२ ३१ २र ३ २ १२
प्रथमे विधर्मं जनयन् प्रजा भुवनस्य गोपाः । वृषा
३ २३ २ ३ २ ३ १ २ ३१ २र ३
पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वा-
१ २र १ २ ३ २ ३२ ३ १ २
नो अद्रिः ॥ ७ ॥ कनिक्रन्ति हरिरा सृज्यमा-
३ १ ३ १ २ ३१२ ३ २ १ २३१ २
नः सीदन् वनस्य जठरे पुनानः । नृभिर्यतः कृणु-
३ २ ३ १ २र ३ २ २ ३ १ २
ते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥८॥
३२र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णो परि
३ १ २ ३ १ २३१ २ ३ १ २
पवित्रे अक्षाः । सहस्रदाः शतदा भूरिदावा शश्व-

३ २ ३ २उ ३क २र १ २ ३ १ २
त्वमं वर्हिरा वाजयस्थात् ॥ ९ ॥ पवस्व सोम मधु-
३ २ ३ १ २र ३ २ ३ २ ३ १ २ २ ३
मा२ऋतावापो वसानो अधि सानो अव्ये । अव
१ २ ३ १ २ ३ १ २ ३ १ २ ३
द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्र-
१ २
पानः ॥ १० ॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे चतुर्थ-दशतिः

अथ षष्ठप्रपाठकस्य प्रथमार्द्धे पञ्चम दशतिः

१ २३ २उ ३ २३ १२ ३१२ ३ १२
प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते
३ १ २ ३ २ ३ १ २ ३१ ३ २र ३ २उ
अस्य सेना । भद्रान् कृण्वन्निन्द्रहवांत्सखिभ्य आ
३ १ २ ३ १ २ २ ३ २ ३
सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥ प्र ते धारा
१ २ ३ २ ३ २ ३ २ ३ १ २र १ २
मधुमतीरसृग्रन् वारं यत्पूतो अत्येष्व्यम् । पव-
३ १ २ ३ १ २ १ २ ३ २ ३ १ २ ३ २
मान पवसे धाम गोनां जनयंत्सूर्य्यमपिन्वो अर्कैः
१ २ ३क २र ३ १ २र
॥ २ ॥ प्र गायताभ्यर्चाम देवांत्सोमं हिनोत म-
३ १ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
हते धनाय । स्वादुः पवतामति वारमव्यमासी-
३ १ २ ३ १ २र १ २ ३ १ २ ३
दतु कलशं देव इन्दुः ॥ ३ ॥ प्र हिन्वानो जनि-

१ २र ३ २३ १ २र ३ १ २ २
ता रोदस्यो रथे न वाजꣳ सनिषन्नयासीत् । इ
३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
न्द्रं गच्छन्नायुधा सꣳशिशानो विश्वा वसु हस्त-
३ १ २ २ ३ २ ३ १ २ ३ १ २ ३ १
योरादधानः ॥ ४ ॥ तक्षद्यदी मनसो वेनतो वा-
२र ३ १ २ ३ १ २र १ २ २ २ ३ १
गुज्येष्ठस्य धर्मं द्युक्षोरनीके । आदीमायन् वरमा
२ ३ २उ ३ १ २ ३ २ ३ २ ३ १ २
वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५ ॥
३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीत-
३ १ २ २ ३ १ २ ३ १ २र ३ १ २ ३
यो धनुत्रीः हरिः पर्य्यद्रवज्जाः सूर्य्यस्य द्रोणं ननक्षे
२ ३ २ ३ २ २ ३ १ २ ३ १ २ ३
अत्यो न वाजी ॥ ६ ॥ अधि यदस्मिन् वाजिनीव
२ ३ १ २ ३ २ ३ २ ३ १ २र ३ १ २ ३ १
शुभ स्पर्द्धन्ते धियः सूरे न । विशः अपो वृणानः
२ ३ १ २ ३ १ २र ३ १ २ ३ १ २
पवते कवीयान् व्रजं न पशुवर्द्धनाय मन्म ॥ ७ ॥
१ २ ३ १ २ ३ १ २ ३ २ २ २ ३ २ ३ २ ३
इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्व-
१ २ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३
न्मदाय । हन्ति रक्षो बाधते पर्य्यरातिं वरिवस्कृ-
२ ३ १ २ ३ १ २ १ २ ३ १ २ ३
ण्वन् वृजनस्य राजा ॥ ८ ॥ अया पवा पवस्वै-
१ २र ३ १ २ ३ १ २ ३ १ २ ३ २
ना वसूनि माꣳश्चत्व इन्द्रो सरसि प्र धन्व । ब्रध्न-

३२ ३ २ ३ २ ३ १ २३१२ ३१२३ १२
श्चिवस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धा-
३ १ २र ३१२ ३ १
त् ॥ ९ ॥ महत्तत्सोमो महिषश्चकारापां यद्गर्भो-
२र ३२ १२३ २ ३ १२ ३ १
ऽवृणीत देवान् । अदधादिन्द्रे पवमान ओजोऽ-
२र ३ २ ३ २ ३ १ २ १ २ ३ २ ३
जनयत्सूर्य्ये ज्योतिरिन्दुः ॥ १० ॥ असर्जि वक्वा
२ ३ २ ३ २ ३ २ ३ १ ३ १ ३ १ २ ३ २
रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा ।
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३
दश स्वसारो अधि सानो अव्ये मृजन्ति वह्निᳩ
१२३१ २ ३२ ३२३२३१ ३ १
सदनेष्वच्छ ॥ ११ ॥ अपामिवेदूर्मयस्तर्त्तुराणाः प्र
२३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
मनीषा ईरते सोममच्छ । नमस्यन्तीरुप च यन्ति
३ २र ३२ ३ १ २
सं चाच विशन्त्युशतीरुशन्तम् ॥ १२ ॥

इति षष्ठप्रपाठकस्य प्रथमार्द्धे पञ्चम-दशतिः ।

अथ षष्ठप्रपाठकस्य द्वितीयार्द्धे प्रथम-दशतिः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३
पुरोजिती वो अन्धसः सुताय मादयित्नवे । अप
१ २ ३ १ २ ३क २र
श्वानᳩ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥
३ २ ३ २ ३ २उ ३ १ २ ३ १ २ १
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति । प-

३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
तिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः । प-
१ २ ३ १ २ ३ १ २
वित्रवन्तो अक्षरं देवान् गच्छन्तु वो मदाः ॥ ३
१ २ ३ १ २ ३ १ २ ३ १ २ ३
सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः । मि-
२ ३ १ २ ३ १ २ ३क २र ३ १ २
त्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ४ ॥
३ १ २ ३ १ २ ३ १ २ ३ १ २
अभी नो वाजसातमं रयिमर्ष शतस्पृहम्
१ २ ३ १ २ ३ १ २ ३ १ २
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३
अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् । व-
२उ ३ १ २ ३ १ २ ३ १ २
त्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ ६ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आ हर्य्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम् ।
३ २उ ३ १ २ ३ १ २ ३ १ २र ३ १
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयु-
२ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
वः ॥७॥ परि त्यं हर्य्यतं हरिं बभ्रुं पुनन्ति वारेण ।
२ ३ २उ ३ २उ ३ १ २ ३ १ २र
यो देवान् विश्वां इत्परि मदेन सह गच्छति ॥८॥
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र २ ३
प्र सुन्वानायान्धसो मर्त्तो न वष्ट तद्वचः । अप

१ २ ३ १ २ ३ २ ३ १ २र
श्वानमराधसं हता मख न भृगवः ॥ ९ ॥

इति षष्ठप्रपाठकस्य द्वितीयार्द्धे प्रथम-दशतिः।

अथ षष्ठप्रपाठकस्य द्वितीयार्द्धे द्वितीय-दशतिः।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ
अभि प्रियाणि पवते चनोहितो नामानि यह्वो अ-
३ २ ३ १ २ १ २र ३ २ ३ २उ ३
धि येषु वर्द्धते । आ सूर्य्यस्य वृहतो वृहन्नधि
२ ३ १ २ ३ २ ३ १ २
रथं विश्वञ्चमरुहद्विचक्षणः ॥ १ ॥ अचोदसो नो
१ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ १
धन्वन्त्विन्दवः प्र स्वानासो वृहद्देवेषु हरयः। वि
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
चिदश्नाना इषयो अरातयोऽर्य्यो नः सन्तु सनि-
३ १२ ३ २उ ३ १ २
षन्तु नो धियः ॥ २ ॥ एष प्र कोशे मधुमां अ-
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ १ २
चिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः। अभ्यृतस्य
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धे-
१ २ १ २ ३ २ ३ १ २ ३ २उ
नवः ॥ ३ ॥ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं
३ २ ३ १ २र ३ १ २ १ २
सखा सख्युर्न प्र मिनाति सङ्गिरम्। मर्य्य इव यु-
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
वतिभिः समर्षति सोमः कलशे शतयामना प-

२ ३ २ ३ १ २ ३ २ ३ २३ १२
था ॥ ४ ॥ धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो
३ १ २ ३ २ ३ १ २ १ २ ३ २३ ३ १
देवानामनुमाद्यो नृभिः । हरिः सृजानो अत्यो न
१२र ३ २ ३ १ २ ३ २ २ १
सत्वभिर्वृथा पाजांसि कृणुते नदीष्वा ॥ ५ ॥ वृषा
३ १ २ ३ २उ ३ १ २ ३ १ २र
मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां
३ १ ३ १ २र ३ १ २ ३ १ २ ३
दिवः । प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य
१ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
हार्द्यविशन्मनीषिभिः ॥ ६ ॥ त्रिरस्मै सप्त धेनवो
३ २ ३ १ २ ३ १ २ ३ २ ३ १
दुदुह्रिरे सत्यामाशिरं परमे व्योमनि । चत्वार्यन्या
२र ३ २३ १ २ ३ २३ १ २र
भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्द्धत ॥ ७ ॥
१ २ ३ १ २३ १ २ ३ १ २र ३ १
इन्द्राय सोम सुषुतः परि स्त्रवापामीवा भवतु र-
२ ३ २ २ ३ १ २ ३ २ ३ १ २
क्षसा सह । मा ते रसस्य मत्सत द्वयाविनो द्रवि-
३ २ ३ १ २ १ २ ३ १ २
णस्वन्त इह सन्त्विन्दवः ॥ ८ ॥ असावि सोमो
३ २उ ३ २३ १ २३ ३ २ ३ १ २र
अरुषो वृषा हरी राजेव दस्मो अभि गा अचि-
३ २र ३ १ २ ३ १ २ ३ १
क्रदत् । पुनानो वारमत्येष्यव्ययं श्येनो न यो-
२र ३ १ २ ३ १ २ २ ३ २उ ३ १ २ ३
निं घृतवन्तमासदत् ॥ ९ ॥ प्र देवमच्छा मधुमन्त

२ ३ १ २ ३ २ ३ २उ १ २ १ २ ३ १ २
इन्द्वोऽसिष्यन्दत गाव आ न धेनवः । बर्हिषदो
३१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वचनावन्त ऊधभिः परिस्रुतमुस्त्रिया निर्णिजं धि-
३ २ ३क २र ३ १ २ ३ १ २ ३
रे ॥ १० अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति
२ ३क २र १ २ ३ २ ३ १ २ ३ १ २
मध्वाभ्यञ्जते । सिन्धोरुच्छ्वासे पतयन्तमुक्षणं
३ २ ३ २ ३ १ २ १ १ २
हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥ पवित्रं
३ १ २ ३ १ २र ३ १ २ ३ १
ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि विश्व-
२ १ २ ३२उ ३ १ २ १ २ ३ १ २र ३
तः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः
१ २र
सं तदाशत ॥ १२ ॥

इति षष्ठप्रपाठकस्य द्वितीयार्द्धे द्वितीय-दशतिः ।

अथ षष्ठप्रपाठकस्य द्वितीयार्द्धे तृतीय-दशतिः ।

२ ३ १ २ ३ २ ३१ २र ३ १ २ ३ २ ३
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जा-
२ ३ १ २ ३ १ १ १ २ ३ १ २ ३
तास इन्दवः स्वर्विदः ॥ १ ॥ प्र धन्वा सोम जागृवि
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३
रिन्द्रायेन्दो परि स्रव । द्युमन्तं शुष्ममा भर स्व
१ २ १ २ ३ १ २र ३ २ ३ १
र्विदम् ॥ २ ॥ सखाय आ नि षीदत पुनानाय प्र

२ २ ३ २ ३१ २र ३ २
गायत। शिशुं न यज्ञैः परि भूषत श्रिये॥ ३॥
१ २ ३ १२ ३ २३१ २ २ ३
तं वः सखायो मदाय पुनानमभि गायत। शिशुं
२ ३१ २ ३१२ ३१ २र३१
न हव्यैः स्वदयन्त गूर्तिभिः॥ ४॥ प्राणा शिशुर्मही
२ ३२ ३२३ १ २ २३ १२ ३१
नां हिन्वन्नृतस्य दीधितिम्। विश्वा परि प्रिया
२३१२ ३२ १२ ३१२ ३ २३ १२
भुवदध द्विता॥ ५॥ पवस्व देववीतय इन्दो धारा
३१ २ २ ३ २३ १२
भिरोजसा। आ कलशं मधुमांत्सोम नः सदः॥ ६॥
१ २ ३ २ ३ २उ २ २३ १ २ १ २
सोमः पुनान ऊर्मिणाव्यः वारं वि धावति। अग्रे
३१ २र २ १ २ १ २३१ २ ३
वाचः पवमानः कनिक्रदत्॥ ७॥ प्र पुनानाय वे
२३ १ २ ३ १२ ३ १ २र ३१ २
धसे सोमाय वच उच्यते। भृतिं न भरा मतिभि
३ १ २ १ २ ३ १ २ ३ १ २
र्जुजोषते॥ ८॥ गोमन्न इन्दो अश्ववत्सुतः सुदक्ष
१ २ ३ २३२ ३ १ २ ३
धनिव। शुचिं च वर्णमधि गोषु धारय॥ ९॥ अ
१ २ ३ १ २३ १ २र १ २३ १
स्मभ्यं त्वा वसुविदमभि वाणीरनूषत। गोभिष्टे व
२ ३ १ २ १२ ३ २उ ३ २ ३
र्णमभि वासयामसि॥ १०॥ पवते हर्य्यतो हरिरति
१ २ ३ १ २ ३क २र ३ १ २ ३ २३ १ २
ह्वरांसि रंह्या। अभ्यर्ष स्तोतृभ्यो वीरवद्यशः

२ ३ १ २ ३ २ ३ १ २ ३ १ २
॥ ११ ॥ परि कोशं मधुश्चुतꣳसोमः पुनानो अर्षति ।
३ २उ ३ १ २ ३ १ २
अभि वाणीर्ऋषीणाꣳ सप्ता नूषत ॥ १२ ॥

इति षष्ठप्रपाठकस्य द्वितीयार्द्धे तृतीय-दशतिः ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
१ २ ३ १ २ ३ ३ १
महि द्युक्ष तमो मदः ॥ १ ॥
१ २ ३ २ ३ २उ ३ १ २ ३ १ २ ३ २
अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयु
१ २र ३ १ २ १ २ ३ १ २
म् । वि कोशं मध्यमं युव ॥ २ ॥ आ सोता परि
३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
षिञ्चताश्वं न स्तोममप्तुरꣳ रजस्तुरम् । वनप्रक्षमु
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दप्रुतम् ॥ ३ ॥ एतमु त्यं मदच्युतꣳ सहस्रधारं
३१ ३ १ २ २ ३ १ २ ३ १ २
वृषभं दिवो दुहम् । विश्वा वसूनि बिभ्रतम् ॥ ४ ॥
१ २ ३ १ २र २ ३ १ २ ३ १ २र
स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
३ ३ १ २ ३ २ २ १ २ ३
सोमो यः सुक्षितीनाम् ॥ ५ ॥ त्वꣳ ह्या३ङ्ग दैव्य
१ २ ३ १ २ ३ १ २ ३ १ २ ३
पवमान जनिमानि द्युमत्तमः । अमृतत्वाय घो-
१ २ ३ १ २र ३ २ ३ १ २
षयन् ॥ ६ ॥ एष स्य धारया सुतोऽव्या वारेभिः

२ १ २ १ २ ३ २ ३ १ २ २ ३
पवते मन्दितमः । क्रीडन्नूर्मिरपामिव ॥ ७ ॥ य उ-
२ १ २ ३ २ ३ १ २र ३ १ २र ३ १ २
स्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोज-
२ २ ३१ २ ३ २ ३ १ २ ३ १ २
सा । अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृ-
३ १ २ १ ३ १ २ ३ १ २
ष्णवा रुज। ओ३म् वर्मीव धृष्णवा रुज ॥ ८ ॥

## उत्तरार्चिकस्य प्रथमप्रपाठके प्रथमार्द्धम्।

१ २   १ १ २ ३ १ २   ३ २ ३ १.
उपास्मै गायता नरः पवमानायेन्दवे। अभि देवा-
२र   ३ २ ३ १ २ ३   १   २र
ए इयक्षते ॥ १ ॥ अभि ते मधुना पयोऽथर्वाणो
३ २ ३ १ २ ३ २   १ २   ३
अशिश्रयुः। देवं देवाय देवयु ॥ २ ॥ स नः पवस्व
२उ ३ १   २र ३ १ २र   १ २ ३ १ २
शं गवे शं जनाय शमर्वते। श९राजन्नोषधीभ्यः
१ २   ३ १   २ ३ १ २
॥ ३ ॥ [१] दविद्युतत्या रुचा परिष्टोभन्त्या
३ २   १ २   ३ १   २र   ३   २
कृपा। सोमाः शुक्रा गवाशिरः ॥ १ ॥ हिन्वानो
३ १ २ ३ १   २र ३क २र   १ २   ३ १
हेतृभिर्हित आ वाजं वाज्यक्रमीत्। सीदन्तो वनु-
२   ३ १   ३   ३ १ २   ३ २
षो यथा ॥ २ ॥ ऋधक् सोम स्वस्तये सञ्जग्मानो
३ १ २   १ २ ३ १ २ ३ २   १ २
दिवा कवे। पवस्व सूर्य्यो दृशे ॥ ३ ॥ [२] पवमा
३ २ ३   १ २   १ २ ३ १
नस्य ते कवे वाजिन्त्सर्गा असृक्षत। अर्वन्तो न
२ ३ १ २   २ ३   १ २   ३ २ ३ १ २ ३ १ २
श्रवस्यवः ॥ १ ॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे
३ १ २ १ २   ३ १ २   १ २   ३ २उ ७
अव्यये। अवावशन्त धीतयः ॥२॥ अच्छा समुद्रमिन्द-
२ ३ २ ३ २ ३ १ २ १ २ ३ २ ३ २ ३ २
वोऽस्तं गावो न धेनवः। अग्मन्नृतस्य योनिमा ॥३॥ [३]

इति सामवेदे उत्तराग्रन्थस्य
प्रथमयाध्यायस्य प्रथमः खण्डः ।

२ १ १ २ ३ १ २ ३ २ ३ १ २
अग्न आ याहि वीतये गृणानो हव्यदातये ।
१ २र ३ १ २ १ २
निहोता सत्सि बर्हिषि ॥ १ ॥ तं त्वा
३ १ २ ३ १ २ ३ १ २
समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा य
१ २ ३ २ ३ २ ३ १ २
विष्ठ्या ॥ २ ॥ स नः पृथु श्रवाय्यमच्छा देव वि
३ १ २ ३ १ २ १ २
वासति । बृहदग्ने सुवीर्य्यम् ॥ ३ ॥ [४] आ नो
३ १ २र २ ३ १ २
मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांᳫ
३ १ २ ३ १ २ ३ १ २र
सि सुक्रतू ॥ १ ॥ उरुशंᳫसा नमो वृधा मह्ना दक्ष
१ २ ३
स्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥ २ ॥ गृणा
२ ३ १ २ ३ १ २ ३ १ २ ३ १
ना जमदग्निना योनावृतस्य सीदतम् । पातंᳫसो
२र १ २ ३ २उ ३
ममृता वृधा ॥ ३ ॥ [५] आ याहि सुषुमा हि त
२ ३ २ ३ १ २ ३ २ २उ ३ १ २ ३ १ २
इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम
१ २ ३ २ ३ २ ३ १ २ ३
॥ १ ॥ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र के

१ २ २ ३ १ २ ३ १ २

शिना । उप ब्रह्माणि नः शृणु ॥ २॥ ब्रह्माणस्त्वा

१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

युजा वयꣳसोमपामिन्द्र सोमिनः । सुतावन्तो

१ २ ३ १ २ ३ १ २ ३ २उ

हवामहे ॥ ३ ॥ इन्द्राग्नी आ गतꣳसुतं गीर्भि

३ १२ ३ १ २ ३ २ ३ २ १

र्नभो वरेण्यम् । अस्य पातं धियेषिता १ ॥ ॥ इ

२ ३ १ २र ३ १ २ ३ १ २ ३

न्द्राग्नी जरितुः स चा यज्ञो जिगाति चेतनः । अ

१ २ ३२ ३२ १२ ३ १ २ ३ १ २

या पातमिमꣳ सुतम् ॥ २ ॥ इन्द्रमग्निं कविच्छदा

३ १ २ ३ १ २ १ २र ३ १ २

यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम्

॥ ३ ॥ [७]

इति सामवेदे उत्तराग्रन्थस्य

प्रथमाध्यायस्य द्वितीय खण्डः ।

३ १ २ ३ १ २र ३ १ २र ३

उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे । उ

२उ ३ २ ३ १ २ २ १ १ २ ३ १ २ ३

ग्रꣳ शर्म महि श्रवः ॥ १ ॥ स न इन्द्राय यज्यवे

३ २ ३ १ २ १ २र

वरुणाय मरुद्भ्यः । वरिवो वित्परि स्रव ॥ २ ॥

३ १ २र ३ २उ ३ २ ३ १ २ १ २

एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषा

२ १ २ ३ १ २ ३ १

सन्तो वनामहे ॥ ३ ॥ [८] पुनानः सोम धारयापो

२र १ २३ १ २र ३ १ २ ३
वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीद
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १
स्युत्सोदेवो हिरण्ययः ॥ १ ॥ दुहान ऊधर्दिव्यं
२र ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
मधु प्रियं प्रत्नँसधस्थमासदत् । आपृच्छ्यं धरुणं
३क २र ३ १ २ ३ १ २ ३ २ १
वाजयर्षसि नृभिर्धौतो विचक्षणः ॥ २ ॥ [९] प्र सु
२र ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
द्रव परि कोशं नि षीद नृभिः पुनानो अभि वा
२र २ ३ १ २ ३ १२ ३ २ ३ १ २
जमर्ष । अश्वं न त्वा वाजिनं मर्जयन्तो ऽच्छा
३ २ २ ३ १ २ ३ १ २ ३ १
वर्ही रशनाभिर्नयन्ति ॥ १ ॥ स्वायुधः पवते देव
२र ३ २ ३ २ ३ १ २ ३ २ ३ १ २
इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां
३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः
२ ३ १ २ ३ १ २र ३ १ २र
॥ २ ॥ ऋषिर्विप्रः पुर एता जनानामृभुर्धीर
३ २ ३ १ २ १ २ ३ १ २ ३ १ २
उशना काव्येन । स चिद्विवेद निहितं यदा सा
३ २ २ ३ २ ३ १ २
मपीच्याऽ३ं गुह्यं नाम गोनाम् ॥ ३ ॥ [१०]

इति सामवेदे उत्तराग्रन्थस्य

प्रथमस्याध्यायस्य तृतीयः खण्डः

३ १ २ ३ १ २ ३ १ २ २ ३
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशा-
३ १ २ २ ३ २ ३ १ २ ३ १ २
नमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुषः ॥ १ ॥
१ २ ३ २ ३ १ २ ३ २ ३ १
नत्वावाᳬ अन्यो दिव्यो न पार्थिवो न जातो न
२ ३ १ २ ३ १ २
जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो
३ १ २ १ २ ३ १
गव्यन्तस्त्वा हवामहे ॥ २ ॥ [११] कया नश्चित्र
२ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २
आ भुवदूती सदा वृधः सखा। कया शचिष्ठया
३ २ १ २ ३ १ २ ३ १ २ ३
वृता ॥ १ ॥ कस्त्वा सत्यो मदानां मᳬहिष्ठो मत्स-
१ २ ३ १ २ ३ २ ३ १ २ ३ २ क ३ १
दन्धसः। दृढा चिदारुजे वसु ॥ २ ॥ अभीषूणः स-
२ ३ १ २ ३ २ ३ १ २ ३ १ २
खीनामविता जरितृणाम्। शतं भवास्यूतये ॥ ३ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
[१२] त वो दस्ममृतीषहं वसोर्मन्दानमन्धसः।
३ २ ३ २ २ ३ ३ २ ३ १ २ ३ १ २
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे
३ २ ३ २ ३ १ २ ३ १ २ ३ १
॥ १ ॥ द्युक्षᳬसुदानुं तविषीभिरावृतं गिरिं न
२ ३ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पुरुभोजसम्। क्षुमन्तं वाजᳬशतिनᳬसहस्रिणं
३ १ २ ३ १ २ ३ १
मक्षू गोमन्तमीमहे ॥ २ ॥ [१३] तरोभिर्वो विद-

द्युमिन्द्रꣳसवाध ऊतये। बृहद्गायन्तः सुतसोमे
अध्वरेहुवे भरं न कारिणम्॥ १॥ न यं दुध्रा व-
रन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः॥ य आ-
दृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम्
॥ २॥ [ १४]

इति सामवेदे उत्तराग्रन्थस्य
प्रथमस्याध्यायस्य चतुर्थखण्डः॥ ४॥

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इ-
न्द्राय पातवे सुतः॥ १॥ रक्षोहा विश्वचर्षणिरभि
योनि मयोहते। द्रोणे सधस्थमासदत्॥ २॥ व-
रिवोधा तमो भुवो मꣳहिष्ठो वृत्रहन्तमः। पर्षिरा
धो मघोनाम्॥ ३॥ [ १५ ] पवस्व मधुमत्तम इ-
न्द्राय सोम क्रतुवित्तमो मदः। महि द्युक्षतमो म-
दः॥ १॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पी-
त्वा स्वर्विदः। स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा

२ ३ १ २ २ ३ १ २ ३ २ ३ १
वाजं नेतशः ॥ २ ॥ [ १६ ] इन्द्रमच्छ सुता इमे
२र ३ १ २ ३ २ ३ २ ३ १ २ ३ १
वृषणं यन्तु हरयः। श्रुष्टे जातास इन्दवः स्वर्वि-
३ ३ १ २र ३ १ २र ३
दः ॥ १ ॥ अयं भराय सानसिरिन्द्राय पवते सु-
२ २ ३ १ २ ३ १ २ ३ २ ३
तः । सोमो जैत्रस्य चेतति यथा विदे ॥ २ ॥ अ-
२उ ३ २ ३ १ २ ३ १ २ ३ १ १
स्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् । व-
२ ३ १ २ ३ १ २ ३ २ ३ १
ज्रञ्च वृषणं भरत्समप्सु जित् ॥ ३ ॥ [ १७ ] पुरो-
२ ३ १ २ ३ १ २ ३ १ २ २ ३ १
जिती वो अन्धसः सुताय मादयित्नवे । अप श्वा
२ ३ १ २ ३क २र १
नं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥ यो धा-
२र ३ १ २ ३ १ २ ३ २ २ ३ २ ३ १
रया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न
२र २ ३ १ २ ३ २र ३ १ २ ३ १ २
कृत्व्यः ॥ २ ॥ तं दुरोषमभी नरः सोमं विश्वाच्या
३ २ ३ १ २ ३ १ २ ३ २
धिया । यज्ञाय सन्त्वद्रयः ॥ ३ ॥ [ १८ ] अभि
३ १ २ ३ १ २ ३ १ २ ३ २उ ३ २ ३
प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु
१ ३ १ २र ३ २ ३ १उ ३ २ ३ १ २
वर्धते । आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्च
३ २ ३ १ २ ३ १ २ ३ १ २
मरुहद्विचक्षणः ॥ १ ॥ ऋतस्य जिह्वा पवते मधु

२ २ ३ १ २र ३ २ ३ १ २र १ २ ३
प्रियंवक्ता पतिर्धियो अस्या अदाभ्यः। दधाति पु-
२ ३ १ २ ३ २ १ २ ३ २ ३ १ २ ३ २ ३ २
त्रः पित्रोरपीच्याऽ३न्नामतृतीयमधि रोचनं दिवः॥२
१ २ ३ २ ३ १ २ ३ १ २ ३ २उ
अव द्युतानः कलशाँ४ अचिक्रदन्नृभिर्येमाणः को
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
श आ हिरण्यये। अभी ऋतस्य दोहना अनूष-
१ २ ३ २ ३ २ ३ १ २
ताधित्रिपृष्ठ उषसो वि राजसि॥ ३॥ [ १९ ]

इति सामवेदे उत्तराग्रन्थस्य

प्रथमस्याध्यायस्य पञ्चम खण्डः॥ ५॥

३ १ २ ३ १ २ ३ १ २ ३ १ २ १
यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे। प्र-
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
प्रवयममृतञ्जातवेदसं प्रियं मित्रन्न शꣳसिषम्॥१॥
३ १ २र ३ २ ३ १ २र ३ १ २र ३ १ २
ऊर्जो नपात४ स हिनायमस्म युर्दाशेम हव्यदा-
२ ३ १ २ ३ १ २र ३ २ ३ २ ३ २ ३ १ २
तये। भुवद्वाजेष्ववितो भुवद्वृधउत त्राता तनूनाम्
२ ३ २ २र ३ १ २ ३ १ २ ३ १
॥ २ [ २० ] एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गि-
२ ३ १ २ ३ १ २ २ ३क २र ३ २
रः। एभिर्वर्द्धास इन्दुभिः॥ १॥ यत्र क्व च ते म-
३ १ २ २ १ २ २ ३ १ २
नो दक्षं दधस उत्तरम्। तत्र योनिं कृणवसे॥२॥

१ २र ३ १ २ ३ १ २र २ ३ १
न हि ते पूर्त्तमक्षिपद्भुवन्नेमानां पते। अथा दु-
२ ३ २ ३ १ २ ३ २उ
वो वनवसे ॥ ३ ॥ [ २१ ] वयमु त्वामपूर्व्य स्थूरं
३ १ २ १ १ २ १ २ ३ १ २
न कच्चिद्भरन्तोऽवस्यवः। वज्रिं चित्रꣳ हवामहे ॥ १ ॥
१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ १ २ ३
उप त्वा कर्म्मन्नूतये स नो युवोग्रश्चक्राम यो धृ-
२ १ २र ३ १ २ ३ २ ३ १ २
षत्। त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सा-
३ २ २ ३क २र ३ १ २
नसिम् ॥ २ ॥ [ २२ ] अधा हीन्द्र गिर्वण उप
३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २ ३ १ २
त्वा काम ईमहे ससृग्महे। उदेव ग्मन्त उद्भिः ॥१॥
१ २र ३ २ ३ १ २ ३ १ २ ३
वार्ण त्वा यव्याभिर्वर्द्धन्ति शूर ब्रह्माणि । वावृ-
१ २ ३ १ २ ३ २ ३ १ २
ध्वाꣳसं चिदद्रिवो दिवेदिवे ॥ २ ॥ युञ्जन्ति हरी
३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३
इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा। इन्द्र-
१ २ ३ १ २
वाहा स्वर्विदा ॥ ३ ॥ [ २३ ]

इति सामवेदे उत्तराग्रन्थस्य
प्रथमस्याध्यायस्य षष्ठः खण्डः।
इत्युत्तरार्च्चिके प्रथमस्यार्द्ध-प्रपाठकः।
अथ द्वितीयाध्याय आरभ्यते।

२ ३ २ ३ १ २ ३ १ २ ३ १ २र ३
पान्तमा वो अन्धस इन्द्रमभि प्र गायत। वि-
१ २ ३ १ २ ३ १ २ ३ २
श्वासाहꣳ शतक्रतुं मꣳहिष्ठं चर्षणीनाम् ॥ १ ॥
३ १ २ ३ १ २ ३ २ १ २ २ ३
पुरुहूतं पुरुष्टुतं गाथान्या३ꣳ सनश्रुतम् । इन्द्र
१ २ २ ३ १ २ ३ १ २ ३ १
इति ब्रवीतन ॥ २ ॥ इन्द्र इन्नो महोनां दाता
२र ३ २ ३ १ २ ३ २ ३
वाजानां नृतुः । महाꣳ अभिज्ञ्वा यमत् ॥ ३ ॥ [१]
२ ३ १ २ ३ १ २ ३ १ २
प्र व इन्द्राय मादनꣳ हर्यश्वाय गायत ।
१ २ ३ १ २ २उ ३ २ ३ १
सखायः सोमपाव्ने ॥ १ ॥ शꣳसेदुक्थꣳ सुदा
२ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
नव उत द्युक्षं यथा नरः । चकृमा सत्यरा
१ २ ३ २उ ३ १ २
धसे ॥ २ ॥ त्वं न इन्द्र वाजयुस्त्वं गव्युः शत-
१ २ ३ १ २ ३ १ २
क्रतो । त्वꣳ हिरण्ययुर्वसो ॥ ३ ॥ [२] वयमु
३ १ २ ३ १ २ ३ २ ३ १ २ १ २
त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा
३ १ २ १ २ ३ १ २र ३ १ २
उक्थेभिर्जरन्ते ॥ १ ॥ न घेमन्यदा पपन वज्रि-
३ २ ३ १ २ २उ ३ १ २
न्नपसो नविष्टौ । तवेदु स्तोमैश्चिकेत ॥ २ ॥
३ १ २ ३ २ ३ २ ३ १ २र
इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।

१ २ २२ १ १ २ १ २ १ १ २
यन्ति प्रमादमतन्द्राः ॥ ३ ॥ [३] इन्द्राय मद्वने
१ १ २र १ १ २ १ १ २ १ १
सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कार-
२ २ १ २ १ २ १ २ १ १ २
वः ॥ १ ॥ यस्मिन् विश्वा अधि श्रियो रणन्ति
१ २ १ १ २ १ २ १ १ २ १ २
सप्त सꣳसदः । इन्द्रꣳ सुते हवामहे ॥ २ ॥ त्रिक-
१ १ २ १ १ २ १ १ २ १ २र १
द्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्वर्धन्तु नो
१ २
गिरः ॥ ३ ॥ [४]

इति सामवेदे उत्तराग्रन्थस्य द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

१ १ २ १ २ १ १ २ १ १ १ १ २ १ १
अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एही
१ २उ १ १ २ १ २ १ १ २ १ १
मस्य द्रवा पिब ॥ १ ॥ शाचिगो शाचिपूजनायꣳ
२र १ २ १ २ १ १ २ १ २
रणाय ते सुतः । आखण्डल प्र हूयसे ॥ २ ॥ यस्ते
१ १ २ १ १ २ २र १
शृङ्गवृषो णपात्प्रणपात् कुण्डपाय्यः । न्यस्मिं दध्र
१ २र १ २र १ १ २ १ २
आ मनः ॥ ३ ॥ [५] आ तू न इन्द्र क्षुमन्तं चित्रं
२ १ २र १ १ २र ३ १
ग्राभꣳ संगृभाय । महाहस्ती दक्षिणेन ॥ १ ॥ विद्मा
२र ३ २ २ १ २ ३ १ २ २
हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमा-

१ २र १ २र ३ १ २र ३
ऋमवोभिः ॥ २ ॥ न हि त्वा शूर देवा न मर्त्तासो
१ २ २ ३उ ३ १ २
दित्सन्तम् । भीमं न गां वारयन्ते ॥ ३ ॥ [६]
३ १ २ ३ २ ३ १ २ ३ १ २ ३
अभि त्वा वृषभा सुते सुतँसृजामि पीतये । तृ-
१ २ ३ १ २ १ २ ३ १ २ ३ १ २
म्पा व्यश्नुही मदम् ॥ १ मा त्वा मूरा अविष्यवो
२ ३ १ २ ३ १ २ १ २ ३ १ २
मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषं वनः ॥२॥
३ २ ३ १ २ ३ १ ३ १ २ १ २
इह त्वा गोपरीणसं महे मन्दन्तु राधसे । सरो
३ १ २र ३ १ २ ३ २उ ३
गौरो यथा पिब ॥ ३ ॥ [७] इदं वसो सुतमन्धः
२ ३ १ २ ३ १ २ १ २ ३ १ २ १
पिबा सुपूर्णमुदरम् । अनाभयिन्नरिमा ते ॥१॥ नृ-
२ ३ २ ३उ ३ २ ३ २ ३ १ २ २ ३
भिर्धौतः सुतो अश्नै रव्या वारैः परिपूतः । अश्वो
२ ३ २ ३ १ २ २ ३ २ ३ २ ३ १ २
न निक्तो नदीषु ॥ २ ॥ तं ते यवं यथा गोभिः
३ १ २ ३ १ २ १ २ ३ १ २ ३ १ २
स्वादुमकर्म्म श्रीणन्तः । इन्द्र त्वास्मिंत्सधमादे
३ १ २र ३ १ २
॥ ३ ॥ [८] इदँह्यन्वोजसा सुतँराधानां पते ।
२ ३ १ १ २ ३२ १२ ३ १
पिबा त्वाऽस्य गिर्वणः ॥ १ ॥ यस्तेअनु स्वधा-
२र ३ १ २र ३क २र १ २
मसत्सुते नि यच्छ तन्वम् । स त्वा ममत्तु सोम्य ॥२॥

१ २ ३ २उ २ १ २ ३ १ २ ३ ३ २
प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः । प्र बाहू
२ ३ १ ३ २उ ३ १ २ ३१ २
शूर राधसा ॥ ३ ॥ [९] आ त्वेता नि षीदतेन्द्र
३ १ २र १ २ ३ १ २
मभि प्र गायत । सखाय स्तोमवाहसः ॥ १ ॥
३ १२ ३१ २र ३ १ २ २ ३ २ ३
पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रꣳ सोमे
१ २ ३२ १ २ ३ २ ३ १ २ ३ २ ३
सचा सुते ॥ २ ॥ स घा नो योग आ भुवत्स रा-
१ २र २ ३ १ २ ३ १ २र
ये स पुरन्ध्या । गमद्वाजेभिरा स नः ॥३॥ [१०]
१ २ ३ १ २ ३ १ २ १ २ ३ १
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इ-
२ ३ १ २ १ २ ३ १ २र ३ १ २ ३ १
न्द्रमूतये ॥ १ ॥ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं
२र २ ३ १ २ ३ २ ३ २ १ २ ३
नरम् । यं ते पूर्वं पिता हुवे ॥ २ ॥ आ घा गम-
२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३
द्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो
१ २ १ २ ३ २ ३ १ २ ३ १ २ २
हवम् ॥ ३ ॥ [११] इन्द्र सुतेषु सोमेषु क्रतुं पुनी-
३क २र ३ २ ३ २ ३ १ २ ३ २
ष उक्थ्यम् । विदे वृधस्य दक्षस्य महाꣳ हि षः ॥१॥
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
स प्रथमे व्योमनि देवानाꣳ सदने वृधः । सुपारः
३ १ २ ३ १ २ ३ २ १ २ १ २
सुश्रवस्तमः समप्सुजित् ॥ २ ॥ तमु हुवे वाजसा-

३ २ ३ १ २ ३ १ २ १ २ ३ १ २र
तय इन्द्रं भराय शुष्मिणम्। भवा नः सुम्ने अन्त-
३ १ २ ३ २
मः सखा वृधे ॥ ३ ॥ [१२] ॥

इति सामवेदे उत्तराग्रन्थस्य द्वितीया-
ध्यायस्य तृतीयः खण्डः।

३ १ २ ३ १ २र ३ १ २र ३ १ २ ३ १
एना वो अग्निं नमसोर्जो नपातमा हुवे। प्रियं
२र ३ १ २ ३ १ २र ३ २ ३ १ २
चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥१॥
१ २ ३ ३ १ २ ३ १ २ ३क २र
स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः।
३ १ २ ३ २ ३ २ ३ १ २ ३ २उ ३ १ २
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनाना-
१ २ ३ २ १ २ ३
म् ॥ २ ॥ [१३] प्रत्यु अदर्श्यायत्यु३च्छन्ती दुहि-
२ ३ २ १ २ ३ १ २ ३ १ २ ३ २ ३ १
ता दिवः। अपो मही वृणुते चक्षुषा तमो ज्यो-
२ ३ १ २ २ ३ १ २ ३ २ ३
तिष्कृणोति सूनरी ॥ १ ॥ उदुस्त्रियाः सृजते सूर्य्यः
१ २ ३ १ २र ३ २ १ २र ३ २ ३ १ ३
सचा उद्यन्नक्षत्रमर्चिवत्। तवेदुषो व्युषि सूर्य्यस्य
३ २ ३ १ २ ३ १ २ ३ १
च सं भक्तेन गमेमहि ॥ २ ॥ [१४] इमा उ वां दि-
२ ३ १ ३ ३ १ २ ३ १ २
विष्टय उस्रा हवन्ते अश्विना। अयं वामह्वेऽवसे
३ १ २ ३ १ २र ३ २ ३ १
शचीवसू विशंविशं हि गच्छथः ॥ १ ॥ युवं चित्रं

२ ३ १ २ २ १ २ ३ १ २ ३ २उ
ददथुर्भोजनं नरा चोदेथाए सूनृतावते । अर्वाग्र-
३ १ २ ३ १ २ ३ १ २ ३ १ २र
थ५ समनसा नि यच्छतं पिबत५सोम्यं मधु ॥२॥
[१५] ॥

इति सामवेदे उत्तराग्रन्थस्य तृतीयाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २ १ २
अस्य प्रत्नामनु द्युत५शुक्रं दुदुह्रे अह्रयः । पयः
३ १ २र ३ १ २र ३ २ ३ १
सहस्रसामृषिम् ॥ १ ॥ अय५ सूर्य्य इवोपदृगय५
२र ३ २ ३ २ ३ १ २र
सराएसि धावति । सप्त प्रवत आ दिवम् ॥ २ ॥
३ १ २र ३ १ २र ३ १ २ १
अयं विश्वानि तिष्ठति पुनानो भुवनोपरि । सो-
२ ३ १ २र ३२ ३ २ ३ १ २
मो देवो न सूर्य्यः ॥ ३ ॥ [१६] एष प्रत्नेन जन्म-
३ २ ३ १ २ ३ २ १ २ ३ १ २
ना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति॥१॥
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । कविर्वि-
२र ३ १ ३ १ २र ३ २ ३
प्रेण वावृधे ॥ २ ॥ दुहानः प्रत्नमित्पयः पवित्रे
१ २ १ २ ३ १ २
परिषिच्यसे । क्रन्दं देवाए अजीजनः ॥ ३ ॥ [१७]
१ २ ३ १ २ ३ २ ३ १ ३ २ १ २ १ २
उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे । पव-

३ २ ३ २ २३ २ ३ २ ३ २ ३ १
मान विद्रा रयिम ॥ १ ॥ उपो पु जातमप्तुरं गो-
२ ३ १ २र १ २ ३ १ २
भिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ २ ॥
२ २ ३ १ २ ३ १ २ ३ २ ३
उपास्मै गायता नरः पवमानायेन्दवे । अभि दे-
१ २र
वाँ इयक्षते ॥ ३ ॥ [१८]

इति सामवेदे उत्तराग्रन्थस्यद्वितीयाध्यायस्य पञ्चमःखण्डः ।

१ २र ३ २ ३ १ २ ३ १ २ १ २
प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः । वना-
३ १ २ ३ १ २र ३ १ २ ३
नि महिषा इव ॥ १ ॥ अभि द्रोणानि बभ्रवः शु-
२ ३ २ ३ १ २ २ ३ १ २
क्रा ऋतस्य धारया । वाजं गोमन्तमक्षरन् ॥ २ ॥
३ १ २र ३ २ ३ १ २ ३ १ २ १ २
सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्ष-
३ १ २ १ २ ३ १ २ ३ २
न्तु विष्णवे ॥ ३ ॥ [१९] प्र सोम देववीतये सि-
३ १ २ ३ १ २ ३ १ २र ३ १
न्धुर्न पिप्ये अर्णसा । अंशोः पयसा मदिरो न
२र ३ २ ३ १ २ ३ १ २ १ २ ३ १
जागृविरच्छाकोशं मधुश्चुतम् ॥ १ ॥ आ हर्यतो
२र ३ १ २ ३ २ ३ १ २र १ २
अर्जुनो अत्के अव्यत प्रियः सूनुर्नमर्ज्यः । तमीं
३ २ ३ २ ३ १ २ ३ १ २र
हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ २॥

१ २र ३ २ ३ १ २ ३ १ २
[२०] प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्।
३२ ३ १ २ १ २ ३ १ २र
सुता विदथे अक्रमुः ॥ १ ॥ आदीꣳहꣳसो यथा
३ १ २र ३ २ २ ३ १ २र
गणं विश्वस्यावीवशन्मतिम् । अत्यो न गोभिर-
१ २ ३ २ ३ १ २ ३ १ २ ३
ज्यते ॥ २ ॥ आदीं त्रितस्य योषणो हरिꣳ हिन्व-
१ २ २ ३ १ २ ३ १ २ ३
न्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ ३ ॥ [२१] अ-
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
या पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः ।
२ ३ १ २ १ २ ३ १ ३ २ ३
मधोर्धारा असृक्षत ॥ १ ॥ पवते हर्यतो हरिरति
१ २ ३ २ २ ३क २र ३ १ २ ३ २ ३ १ २
ह्वराꣳसि रꣳह्या । अभ्यर्ष स्तोतृभ्यो वीरवद्यशः
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
॥ २ ॥ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
३ १ २ ३ १ २ ३ २ ३ १ २र
अप श्वानमराधसꣳहता मखन्न भृगवः ॥३॥[२२]

इति प्रथम प्रपाठकः ।

अथ तृतीयोऽध्यायः आरभ्यते ।

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः ।
३ १ २र ३ १ २ १ २ ३ १ २ ३
अभि विश्वानि काव्या ॥ १ ॥ त्वꣳ समुद्रिया अ-
२ ३ १ २र ३ १ २ १ ३
पोऽग्रियो वाच ईरयन् । पवस्व विश्वचर्षणे ॥२॥

२ ३१ २र ३ १ २ १ २
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे । तुभ्यं
३ १२ १२ ३ १२ ३२
धावन्ति धेनवः ॥ ३ ॥ [१] पवस्वेन्दो वृषा सुतः
३१ २ ३२३ १२ २३ २३१२
कृधी नो यशसो जने । विश्वा अप द्विषो जहि।१।
१ २ ३ २ ३१ २३१२ ३२ १२
यस्य ते सख्ये वयᳲ सासह्याम पृतन्यतः । तवेन्दो
२ १ २३२ १२ ३१ २र ३२
द्युम्न उत्तमे ॥ २ ॥ या ते भीमान्यायुधा तिग्मा-
३ २३ १२ १२ ३२
नि सन्ति धूर्वणे । रक्षा समस्य नो निदः ॥३॥[२]
१२ ३१ २३ १२ ३ १२ २
वृषा सोम द्युमाᳲ असि वृषा देव वृषव्रतः । वृ-
३ १ २ १ २ ३ २ ३ २ ३
षा धर्म्माणि दध्रिषे ॥ १ ॥ वृष्णस्ते वृष्ण्यᳲ शवो
२३ २३ १२ ३२ १ २र३ १ २र
वृषा वनं वृषा सुतः । स त्वं वृषन्वृषेदसि ॥ २ ॥
२३ १२ ३ २३ १ २र३ १२र १
अश्वो न चक्रदो वृषा सङ्गा इन्दो समर्वतः । वि-
२३१ २र २३ १ २ ३१२
नोराये दुरो वृधि ॥ ३ ॥ [३] वृषा ह्यसि भानुना
३ १ २ १२ ३१ २
द्युमन्तं त्वा हवामहे । पवमान स्वर्दृशम् ॥ १ ॥
२३१ २ ३१२ ३ १२ ३१ २ १
यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः । द्रो-
२ ३१ २ ३ २ ३२ ३ १२
णे सधस्थमश्नुषे ॥ २ ॥ आ पवस्व सुवीर्यं मन्द-

३१ २ ३१ २
मा नः स्वायुध इहो ष्विन्दवा गहि ॥ ३ ॥ [४]
१२ ३२ ३ १२ १२ ३ १
पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्व-
२र १ २ ३ १२३१२ ३१२ ३
मा वृणीमहे ॥ १ ॥ ये ते पवित्रमूर्मयोऽभिक्षरन्ति
१ २ १ २ १ २ ३
धारया । तेभिर्नः सोम मृडय ॥ २ ॥ स नः पुना-
१ २र ३२ ३ १२३१ २ १२
न आ भर रयिं वीरवतीमिषम् । ईशानः सोम
३ १ २ १ २ ३१ २ ३ १ २
विश्वतः ॥ ३ ॥ [५] अग्निं दूतं वृणीमहे होतारं
३ १ २ ३ २ ३१ २ ३१२ ३
विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ अ-
१ २ ३ १ २ ३ १२ ३ १२
ग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
३ १ २ ३ २ १ २ ३ २ ३ १ २
हव्यवाहं पुरुप्रियम् ॥ २ ॥ अग्ने देवाँ इहा वह
३ २ ३१ २ २ ३ १ २ ३ १ २
जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥३॥[६]
३ २ ३ १ २ ३ १२३ १ २ २ ३ २
मित्रं वयं हवामहे वरुणं सोमपीतये । या जाता
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
पूतदक्षसा ॥ १ ॥ ऋतेन यावृतावृधावृतस्य ज्यो-
२ ३ १ २ २ ३ १ २र १ २
तिषस्पती । ता मित्रावरुणा हुवे ॥ १ ॥ वरुणः प्रा-
३ १ २ ३ १ २र ३ १ २ १ २
विता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः

३ १ २ २ ३ २ ३ १ २ ३ १ २र
सुराधसः ॥ ३ ॥ [७] इन्द्रमिद्गाथिनो बृहदिन्द्र-
३ १ २ ३ १ २ २ ३ १ २ २ ३
मर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ १ ॥ इन्द्र
२उ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री
२ ३ १ २ २ ३ १ २ ३ १ २
हिरण्ययः ॥ २ ॥ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु
३ १ ३ १ २ ३ १ २ १ २ ३ २ ३ १
च । उग्र उग्राभिरूतिभिः ॥ ३ ॥ इन्द्रो दीर्घाय च-
२ ३ १ २र ३ २ २उ ३ १ २
क्षस आ सूर्य्यꣳ रोहयद्दिवि । वि गोभिरद्रिमैरयत्
१ २ ३ १ २र ३ १ २ ३ १ २र
॥४॥ [८] इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे ।
३ १ २र ३ १ २ १ २र ३ १
धियो धेना अवस्यवः ॥ १ ॥ ता हि शश्वन्त ई-
२ ३ १ २र ३ १ २ ३ २ ३ १ २
डत इत्था विप्रास ऊतये । सबाधो वाजसातये
१ २ ३ १ २ ३ २ ३ १ २
॥ २ ॥ ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवाम-
३ १ २ ३ १ २
हे । मेधसाता सनिष्यवः ॥ ३ ॥ [९]

इति सामवेदे उत्तराग्रन्थस्य तृतीया-
ध्यायस्य द्वितीयः खण्डः ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ २ २ १
वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा
१ २ ३ १ २ १ २ ३ १ २ ३ २
दधान ओजसा ॥ १ ॥ तं त्वा धर्त्तारमोण्योः

१ २ ३ १ २ ३ १ ३र ३ १ २
पवमान स्वर्दृशम् । हिन्वे वाजेषु वाजिनम् ॥२॥
३ २ ३ २ ३२उ ३ १ २ ३ १ २ २
अया चित्ता विपानया हरिः पवस्व धारया । यु-
३ १ २ २ ३ १ २
जं वाजेषु चोदय ॥ ३ ॥ [१०] वृषा शोणो अ-
३ १ २ ३ २ ३ १ २ ३ २ ३ २
भिक निक्रदद्गा नदयन्नेपि पृथिवीमुत द्याम् ।
१ २ ३ १ २र ३ १ २ ३ १ २ ३
इन्द्रस्येव वग्नुरा शृणव आजौ प्रचोदयन्नर्षसि
२ ३ २ ३ २ ३ १ २ ३ १ २ ३
वाचमेमाम् ॥ १ ॥ रसाय्यः पयसा पिन्वमान ई-
१ २ ३ १ २ ३ २ १ २ ३ १ २
रयन्नेषि मधुमन्तमंशुम् पवमान सन्तनिमेषि
३ १ २र ३ १ २ ३ १
कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ २ ॥ एवा
२ ३ १ २र ३ १ २ ३ १ २ ३ २
पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् ।
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सो-
३ २
म सिक्तः ॥ ३ ॥ [११] ॥

इति सामवेदे उत्तराग्रन्थस्य तृतीया-
ध्यायस्य तृतीय खण्डः ।

१ २र ३ १ २र ३ १ २ २
त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां
३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥

१ २र ३२ ३१ २३१
स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो
२ १ २र ३क १र ३ १ २ ३२उ
अद्रिवः। गायश्वँ रथ्यमिन्द्र सं किर सत्रा वा-
३ २ ३ १ २ ३ १ २र ३ १ २
जं न जिग्युषे ॥ २ ॥ [१२] अभि प्रः वः सुराध-
३ १ २ ३ १ २ ३ २ २ ३ १ २ ३ १ २
समिन्द्रमर्च यथा विदे । यो जरितृभ्यो मघवा
३ १ २ ३ १ २ १ २ ३ १ २ ३ १
पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥ शतानीकेव प्र
२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३
जिगाति धृष्णुयाहन्ति वृत्राणि दाशुषे । गिरेरिव
१ २र ३ १ २ ३ १ २
प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः॥२॥[१३]
२ ३ १ २र ३ १ २ १ २
त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः। स इ-
३ १ २ ३२ ३२३ १२३१ २
न्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥१॥
१ २ ३ १ २ ३ १ २ ३
मत्स्वा सुशिप्रिन् हरिवस्तमीमहे त्वया भूषन्ति वे-
१२ २३ १२ ३ १ २ ३ १ २
धस. तव श्रवाँस्युपमान्युक्थ्य सुतेष्विन्द्र गि-
र्वणः ॥ २ ॥ [१४]

इति सामवेदे उत्तराग्रन्थस्य तृतीया-
ध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

२ ३ २३ १२३ १२ ३ १ २ ३ १
यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावी-

२ - ३ २ १ २ ३ १ २ ३ २ ३ - २ ३ १ २
रयिंशं सहा ॥ १ ॥ जघ्निर्वृत्रममित्रियं सस्निर्वाजं
३ १ २ १ २ ३ १ २ १ २
दिवेदिवे । गोषातिरश्वसा असि ॥ २ ॥ सम्मिश्लो
३ १ २ ३ २ ३ २ ३ १ २ १ २ ३ १उ
अरुषो भुवः सूपस्थाभिर्न धेनुभिः । सीदं छ्येनो
३ २ ३ २ ३ २ ३ २उ ३ १ २
न योनिमा ॥ ३ ॥ [१५] अयं पूषा रयिर्भगः सोमः
३ १ २ २ ३ १ २ ३ १ २ ३क २र ३ १ २
पुनानो अर्षति । पतिर्विश्वस्य भूमनो व्यख्यद्रोद-
३ २ १ २ ३ १ २ ३ २ ३ १ २ ३
सी उभे ॥ १ ॥ समु प्रिया अनूषत गावो मदाय
१ २ १ २ ३ १ २र ३ १
घृष्वयः । सोमासः कृण्वते पथः पवमानास इ-
२ १ २र ३ १ २र ३ १ २ ३ १
न्दवः ॥ २ ॥ य ओजिष्ठस्तमा भर पवमान श्रवा-
२ १ २र ३ २ ३ २ ३ २र ३ १ २
य्यम् । यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ३ ॥
१ २ ३ १ २ ३ २उ ३ १ २
[१६] वृषा मतीनां पवते विचक्षणः सोमो अह्नां
३ १ २र ३ १ ३ १ २र ३ १ २
प्रतरीतोषसां दिवः । प्राणा सिन्धूनां कलशां
३ १ २ ३ १ २ ३ १ २ ३ १ २
अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ १ ॥
३ १ २ ३ २ ३ १ २र ३ २उ ३ १
मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि को-
२ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३
शां असिष्यदत् । त्रितस्य नाम जनयन्मधु क्षर-

१ २ ३ २ ३ १ २ ३१२ ३ १ २
न्निन्द्रस्य वायुᳪ सख्याय वर्धयन् ॥ २ ॥ अयं पु-
३ २ ३ १ २ ३ १ ३र
नान उषसो अरोचयदयᳪ सिन्धुभ्यो अभवदु लो-
३ २ ३ २उ ३ १ २ ३ २ ३ २ ३ १ २
ककृत्। अयं त्रिः सप्त दुदुहान आशिरᳪ सोमो
३ १ २ ३ १ २ ३ २ ३ १ ३र
हृदे पवते चारु मत्सरः ॥ ३ ॥ [१७] एवा ह्यसि
३ २ ३ १ ३र ३ २ ३ २ ३२ ३ २ ३ १ २
वीरयुरेवा शूर उत स्थिरः। एवा ते राध्यं मनः॥१॥
३ २ ३ १ २ ३ १ २ २ १ २ १
एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः। अ-
२ ३ १ २ २उ ३ १ २ ३
धा चिदिन्द्र नः सचा ॥ २ ॥ मो षु ब्रह्मेव तन्द्र-
१ २र १ २ ३ २ ३ १ २
युर्भुवो वाजानां पते। मत्स्वा सुतस्य गोमतः
२ ३ १ २ ३ १ २ ३
॥ ३ ॥ [१८] इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं
१ २ ३ २ ३ ३ १ ३ १ २ ३ १ २ ३ १ २
गिरः। रथीतमᳪ रथीनां वाजानाᳪ सत्पतिं पति-
३ १ २ ३ २३ १ २
म् ॥ १ ॥ सख्ये त इन्द्र वाजिनो मा भेम शवस-
२ ३ १ २र ३ १ २ ३ १ २
स्पते। त्वामभि प्र णोनुमो जेतारमपराजितम्॥२॥
३ १ २र ३ २ ३ १ ३र ३ १ २ ३ १
पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः। यदा
३र ३ १ २ ३ २ ३ १ २ ३ २
वाजस्य गोमत स्तोतृभ्यो मᳪहते मघम् ॥३॥ [१९]

इति द्वितीयप्रपाठकस्य प्रथमार्द्धम् ।

इति सामवेदेउत्तराग्रन्थे तृतीयोऽध्यायः ।

अथ चतुर्थोऽध्याय आरभ्यते ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३
एत असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्य-
१ २र ३ १ २ ३ २ ३ २ ३ २ ३
भि सौभगा ॥ १ ॥ विघ्नन्तो दुरिता पुरु सुगा तो-
१ २ ३ १ २ १ २ २ ३ १ २
काय वाजिनः । त्मना कृण्वन्तो अर्वतः ॥ २ ॥
३ २ ३ १ २ ३ २ ३क २र ३ २ १ २ ३
कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् । इडाम-
१ २ ३ १ २ १ २ ३ १ २ ३
स्मभ्यं संयतम् ॥ ३ ॥ [१] राजा मेधा भिरीयते
१ २ ३ १ २र ३ १ २ ३ १ २
पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ १ ॥
३ २ ३ २ ३ १ २ ३ १ २र ३
आ नः सोम सहो जुवो रूपं न वर्चसे भर । सु-
२ ३ १ २ १ २ ३ २
ष्वाणो देववीतये ॥ २ ॥ आ न इन्दो शातग्वि-
३ २ ३ २ ३ १ २ २ ३ १ २ ३ १ २
नं गवां पोषं स्वश्व्यम् । वहा भगत्तिमूतये ॥ ३ ॥
१ २ १ २ ३ १२ ३ १ २ ३ २
[२] तं त्वा नृम्णानि बिभ्रत सधस्थेषु महो
३ २ १ २ ३ १ २ १ २ ३क
दिवः । चारुं सुकृत्ययेमहे ॥ १ ॥ संवृक्तधृष्णुमु-
२र ३ १ २ ३ १ २ ३ १ २र ३ १ २
क्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥

१ २ ३ २ ३क २र ३ १ २ ३ २
२ ॥ अतस्त्वा रयिरभ्ययद्राजानꣳ सुक्रतो दिवः ।
३ १ २ ३ १ २ १ २ ३ १
सुपर्णो अव्यथी भरत् ॥ ३ ॥ अधा हिन्वान
२ ३ १ २र ३ १ २ ३ १ २र
इन्द्रियं ज्यायो महित्वमानशे । अभिष्टिकृद्विचर्ष-
१ २ ३ १ २ ३ १ २र ३
णिः ॥ ४ ॥ विश्वस्मा इ स्वर्दृशे साधारणꣳ रज-
१ २ ३ २ ३ २ ३ १ २ ३ १
स्तुरम् । गोपामृतस्य विर्भरत् ॥ ५ ॥ [३] इषे
२ ३ १ २ ३ १ २ ३ १ २ १ २ ३
पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रु-
१ २र ३ १ २र ३ २ ३ १
चाभि गा इहि ॥ १ ॥ पुनानो वरिवस्कृध्यूर्जं ज-
२ १ २ ३ २ ३ १ २ ३
नाय गिर्वणः । हरे सृजान आशिरम ॥ २ ॥ पु-
२ ३ १ २ ३ १ २ ३ २ ३
नानो देववीतय इन्द्रस्य याहि निष्कृतम् । द्युता-
२ ३ १ २ ३ २
नो वाजिभिर्हितः ॥ ३ ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य चतुर्थ-

ध्यायस्य प्रथमः खण्डः ।

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । ह-
२ ३क २र १ २र ३ १ २ ३ १
व्यवाड्जुह्वास्यः ॥ १ ॥ यस्त्वामग्ने हविष्पतिर्दूतं
२ ३ १ २ १ २ ३ १ २ २
देव सपर्यति । तस्य स्म प्राविता भव ॥ २ ॥ यो

३ २ ३ १ २ ३ १ २ ३ १ २ १ २
अग्निं देववीतये हविष्मा॑ आविवासति । तस्मै
३ १ २ ३ १ २ ३ १
पावक मृडय ॥ ३ ॥ [५] मित्र॑ हुवे पूतदक्षं व-
३ ३ १ २ १ २ ३ २ ३ १ २
रुणं च रिशादसम् । धियं घृताचीं साधन्ता॥१॥
३ १ २ १ २ ३ १
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृह-
२ ३ १ २ ३ १ २र ३
न्तमाशाथे ॥ २ ॥ कवी नो मित्रावरुणा तुविजा-
१ २३१२ १२ ३१२
ता उरुक्षया । दक्षं दधाते अपसम् ॥ ३ ॥ [६]
१२ ३ १ २र ३ १ २र
इन्द्रेण स॑ हि दृक्षसे संजग्मानो अबिभ्युषा ।
३१ २३ १२ १ २र ३ २उ ३ १ २
मन्दू समानवर्चसा ॥ १ ॥ आदह स्वधामनु पुन-
३ १ २ ३ २ १ २ ३ १ २ ३ १ २ ३
र्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ २ ॥ वी-
१ २ ३ २ ३ १ २ ३ १२ १ २
डु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अवि-
३ २ ३ १ २ १ २३ १२ ३२
न्द उस्रिया अनु । ॥ ३ ॥ [७] ता हुवे ययोरिदं
३१ २र ३ २ ३ २ ३ १ २र
पप्ने विश्वं पुरा कृतम् । इन्द्राग्नी न मर्धतः ॥१॥
३१ २ ३२ ३ १२ ३ १ २ १ २
उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो
३ १ २ २ ३ ३१ २र ३ १
मृडात ईदृशे ॥ २ ॥ हथो वृत्राण्यार्या हथो दा-

२र ३ २उ २ ३ १ २
सानि सत्पती । हथो विश्वा अप द्विषः ॥३॥ [८]

इति सामवेदे उत्तराग्रन्थस्य चतुर्था
ध्यायस्य द्वितीयः खण्डः ॥ २ ॥

३ १ २र २ ३ ३ १ २ ३ २ ३ १ २ ३
अभि सोमास आयवः पवन्ते मद्यं मदम् । समु-
१ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
द्रस्याधि विष्टपे मनीषिणो मत्सरासोः मदच्युतः
१ २ ३ १ २र ३ २ ३ १ २ ३ २
॥ १ ॥ तरत्समुद्रं पवमान ऊर्म्मिणा राजादेव
३ २ ३ २ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ऋतं बृहत् अर्षा मित्रस्य वरुणस्य धर्मणाप्र हि-
३ २ ३ २ ३२ १ २ ३ १ २ ३ १ २
न्वान ऋतं बृहत् ॥ २ ॥ नृभिर्येमाणो हर्य्यतो विच-
३ १ २र ३ १ २ ३क २र ३ १ २र ३
क्षणो राजादेवः समुद्र्यः ॥३॥ [९] तिस्रो वाच ईरयति
१ २र ३ १ २ ३ १ २र ३ २ १ २
प्र वह्निः ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो
३ १ २ ३ १ २ ३ १ २ ३ १ २
यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वा-
३ २ २ ३ १ २ ३ १ २ ३ २उ
वशानाः ॥ १ ॥ सोमं गावो धेनवो वावशानाः
३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
सोमं विप्रा मतिभिः पृच्छमानाः । सोमः सुत ऋृ-
३ १ २ ३ १ २ ३ २ २ ३ २ १ ३
च्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥२॥
३ १ २ ३ १ २ ३ १ २ ३ १ २
एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः

३ २   २ ३ १   २   ३ १   २र   ३ २ ३   १ २
स्वस्ति। इन्द्रमा विश बृहता मदेन वर्धया वाचं
३ २ ३   १ २
जनया पुरन्धिम्। ॥ ३ ॥ [१०]

इति सामवेदे उत्तराग्रन्थस्य चतुर्थाध्या-

यस्य तृतीयः खण्डः ॥ ३ ॥

१   २र   ३ २   ३ १   २र ३ २   १ २
यद्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः। न त्वा
३ २ ३   २ ३   २ ३ २   ३ १ २ ३   १ २
वज्रिं त्सहस्रꣳ सूर्य्या अनु न जातमष्ट रोदसी॥१॥
१   २   ३ १   २र   ३ १ २   ३ १
आ पप्राथ महिना वृष्णया वृषन्विश्वा शविष्ठ श-
२   ३ १   २   ३   १ २   ३ १ २र
वसा अस्माꣳ अव मघवन् गोमति व्रजे वज्रिं
३ १   २ ३ १ २   ३ १ २   २ १ २
चित्राभिरूतिभिः ॥ २ ॥ [११] वयं घ त्वा सुताव-
३   २   ३   २   ३ १ २   ३ १ २   ३ १ २
न्त आपो न वृक्तबर्हिषः। पवित्रस्य प्रस्रवणेषु
३ १ २   ३ १ २   १ २
वृत्रहन्परि स्तोतार आसते ॥ १ ॥ स्वरन्ति त्वा
३ २उ   ३ १ २   ३ २ ३   १ २   ३ २ ३ १   २ ३
सुते नरो वसो निरेक उक्थिनः। कदा सुतं तृषा-
२उ   ३ १ २ ३ १ २ ३ २ ३   १ २
ण ओक आगमदिन्द्र स्वब्दीव वꣳसग. ॥ २ ॥
१   २   ३ २   ३ १ २र   ३ १ २   ३ १ २
कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम्। पिशङ्ग
३ १   २र   ३ २
रूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे॥३॥[१२]तर-

३ १ २ ३ २ ३ १ २ ३२ २ ३ १
णिरित्सप्रासति वाजं पुरन्ध्या युजा । आ व इ-
२ ३१ २ ३ २ ३ १ ३र ३१२
न्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ १ ॥
१ २३१२ ३ १२ ३ १ २र ३ १ २
न दुष्टुतिर्द्रविणो देषु शस्यते न स्रेधन्तं रयिर्न-
३ २ ३ १ २ ३ २-३ १ २ ३ १
शत् । सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पा-
२र ३ २
र्ये दिवि ॥ २ ॥ [१३]

इति सामवेदे उत्तराग्रन्थस्य चतुर्थाध्या-
यस्य चतुर्थः खण्डः ॥ ४ ॥

३ २उ ३ १२ ३ १ २ ३१२ १
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ॥ हृ-
२ ३ १ २ ३ १ २र ३ २
रिरेति कनिक्रदत् ॥ १ ॥ अभि ब्रह्मीरनूषत यह्वी-
३ १२ ३ १२ ३१२ ३१ २र
ऋतस्य मातरः । मर्जयन्तीर्दिवः शिशुम् ॥ २ ॥
३ १ २३२ ३ २३ १ २ ३ १ २ १
रायः समुद्राँश्चतुरोऽस्मभ्यं सोम विश्वतः । आ
२ ३ १ २ ३ २ ३ १ २ ३
पवस्व सहस्रिणः ॥ ३ ॥ [१४] सुतासो मधुमत्तमाः
२ ३ १ २ ३ १ २ ३ १ २ ३ १
सोमा इन्द्राय मन्दिनः । पवित्रवन्तो अक्षरं देवा-
२ ३ १ २ २ ३ १ २ ३
न् गच्छन्तु वो मदाः ॥ १ ॥ इन्दुरिन्द्राय पवत
१ २ ३ १ २ ३ १ २र ३ २ ३
इति देवासो अब्रुवन् । वाचस्पतिर्मखस्यते विश्व-

१२ ३ १ २ ३ १ २ ३ १
रयेशान ओजसः ॥ २ ॥ सहस्रधारः पवते समुद्रो
२ ३ २ २ ३ १ २ ३ १ २ ३
वाचमीङ्खयः। सोमस्पती रयोणा५ सखेन्द्रस्य दि-
१ २ ३ १ २ ३ १ २
वेदिवे ॥ ३ ॥ [१५] पवित्रं ते विततं ब्रह्मणस्पते
३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १
प्रभुर्गात्राणि पर्य्येषि विश्वतः। अतप्ततनूर्न तदामो
२ ३ २ ३ १ २ ३ १ ३ २ १ २
अश्नुते शृतास इद्वहन्तः सं तदाशत ॥ १ ॥ तपो-
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
ष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्य-
१ २ ३ १ २ ३ १ २ ३ २ ३ १
स्थिरन्। अवन्त्यस्य पवितारमाशवो दिवः पृष्ठ-
२ ३ १ २ १ २ ३ २ ३ १ २
मधि रोहन्ति तेजसा ॥ २ ॥ अरूरुचदुषसः पृश्नि-
२ ३ ३ १ २ ३ १ २ २ ३ ३ १
रग्रिय उक्षा मिमेति भुवनेषु वाजयुः। मायावि-
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १
नो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा
२
दधुः ॥ ३ ॥ [१६]

इति सामवेदे उत्तराग्रन्थस्य चतुर्था-

ध्यायस्य पञ्चमः खण्डः।

१ २ ३ १ २ ३ २ ३ १ २
प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।
३ १ २ ३ १ २ १ २ ३ १ २ ३
उपस्तुतासो अग्नये ॥ १ ॥ आ वंसते मघवा वी-

२ ३ २ ३ १ २ ३ १ २ ३ १ २
स्वद्यशः संमिद्धो द्युम्नराहुतः । कुविन्नो अस्य सु-
३ १ २र३ २ ३ १ २ ३ १ २ २
मतिर्भवीयस्यच्छा वाजेभिरागमत् ॥ २ ॥ [१७] तं
३ १ २ ३ १ २ ३ १ २ ३ २ ३
ते मदं गृणीमसि वृषणं पृक्षु सासहिम् । उ लो-
१ २ ३ २ २ २ ३ १ २ ३
ककृत्नुमद्रिवो हरिश्रियम् ॥ १ ॥ येन ज्योतीᳪष्या-
२ ३ १ २ ३ १-२ ३ २ ३ २ ३ २ ३
यवे मनवे च विवेदिथ । मन्दानो अस्य बर्हिषो
१ २ २ ३ १ २ ३ १ २र
वि राजसि ॥ २ ॥ तदद्या चित्त उक्थिनोऽनु ष्टु-
३ १ २ १ २ ३ १ २ ३ १ २
वन्ति पूर्वथा । वृषपत्नीरपो जया दिवेदिवे ॥ ३ ॥
३ १ २र ३ २उ ३ १ २ ३ १ २
[१८] श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्य्यति ।
३ १ २ ३ १ २ ३ १ २ ३ १ २
सुवीर्य्यस्य गोमतो रायस्पूर्धि महाᳪ असि ॥ १ ॥
१ २ ३ १ २ ३ १ २ ३ १ ३
यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् । चि-
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
कित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ २ ॥
१ २ ३ २उ ३ १ २ ३ १ २ ३ २ ३
तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः । पु-
१ २ ३ २ ३ १ २
रूण्यस्य पौᳪस्या सिषासन्तो वनामहे ॥ ३ ॥ [१९]

इति द्वितीयः प्रपाठकः ।

इति सामवेदे उत्तराग्रन्थस्य चतुर्था-

ध्यायस्य षष्ठः खण्डः ॥ ६ ॥

अथ तृतीयः प्रपाठकः ।

पञ्चमाध्यायः आरभ्यते ।

२ ३ १ २ ३ १ २ ३ १ १ २ ३
प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्
२ ३ १ २ १ २र ३ १ २
पयसा धरीमणि । प्रान्तरिक्षात्स्थाविरीस्ते असृ-
३ १ २ ३ १ २ ३ १ २ १
क्षत ये त्वा मृजन्त्यृषिषाण वेधसः ॥ १ ॥ उभ-
२ ३ १ ३ ३ १ २ ३ १ २ ३ १ ३र
यतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति
३ १ २ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३
केतवः । यदी पवित्रे अधि मृज्यते हरिः सत्ता
१ २र ३ १ २ २ ३ १ २
नि योनौ कलशेषु सीदति ॥ २ ॥ विश्वा धामा-
३ १ २ ३ १ २ ३१ २र
नि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यन्ति
३ १ २ ३ २ २ ३ १ २ ३ २३ १ २
केतवः । व्यानशी पवसे सोम धर्म्मणा पतिर्विश्व-
३ २ २ १ २
स्य भुवनस्य राजसि ॥३॥[१] पवमानो अजीजन-
३ २ ३ १ २र ३ २ १ २ ३ २ ३ २
द्दिवश्चित्रं न तन्यतुम् ज्योतिर्वैश्वानरं बृहत् ॥१॥
१ २ ३ २ ३ २ ३ १ २ ३ २ २उ ३ १ २
पवमान रसस्तव मदो राजन्नदुच्छुनः । वि वारमव्य
१ २ ३ २ ३ २ ३ १ ३
मर्षति॥२॥पवमानस्य ते रस दक्ष वि राजति द्यु-

२ २ ३ २ ३क २र ३ २ २उ
मान्। ज्योतिर्विश्वꣳ स्वर्दृशे ॥ ३ ॥ [२] प्र य-
३ १ २र ३ २ ३२३ १२ १२
द्गावो न भूर्णय स्त्वेषा अयासो अक्रमुः। घ्नन्त-
३ २उ ३ १ २ ३ १२ ३२ ३
कृष्णामप त्वचम् ॥ १ ॥ सुवितस्य वनामहेऽति
१२ ३क २र ३ २ ३१ २ ३ ३२ ३
सेतुं दुराव्यम्। साह्याम दस्युमव्रतम् ॥ २ ॥ शृ-
२ ३१ २ ३ १ २र ३ १ २ १२
ण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः। चरन्ति
३१ २ ३ २ १ २ ३ २उ ३ १ २
विद्युतो दिवि ॥ ३ ॥ आ पवस्व महीमिषं गोम-
३ १२ १ २ ३ १ २
दिन्दो हिरण्यवत्। अश्ववत्सोम वीरवत् ॥ ४ ॥
१ २ ३ २ ३ १ २र २ ३उ
पवस्व विश्वचर्षण आ मही रोदसी पृण। उषाः
३ २ ३१ २ १ २ ३ २ ३
सूर्य्यो न रश्मिभिः ॥ ५ ॥ परि नः शर्म्मयन्त्या
१ २ ३ १ २ १ २ ३ १ २ ३ १ २
धारया सोम विश्वतः। सरा रसेव विष्टपम् ॥ ६ ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य पञ्चमा-
स्याध्यायस्य प्रथमः खण्डः।

३ १ २ २ १ २ ३ २ ३ १ ३ १ २
आशुरर्ष बृहन्मते परि प्रियेण धाम्ना। यत्र
३ २उ ३ १ २ ३ १ २र ३ १
देवा इति ब्रुवन् ॥ १ ॥ परिष्कृण्वन्ननिष्कृतं ज-
२ ३२१ १२ ३ २ ३१ २र
नाय यातयन्निषः। वृष्टिं दिवः परि स्रव ॥ २ ॥

३ २उ ३१ २र ३१२ ३२३ २
अयं स यो दिवस्परि रघुयामा पवित्र आ ।
१२ ३१ २र ३१२ ३२३ २उ
सिन्धोरूर्मा व्यक्षरत् ॥ ३ ॥ सुत एति पवित्र आ
३ १२३ १ २ ३१२ ३१
त्विषिं दधान ओजसा । विचक्षाणो विरोच-
२ ३ १२ ३२३ १२ ३
यन् ॥ ४ ॥ आविवासन् परावतो अथो अर्वा-
१२ ३२ १२ ३१२ ३
वतः सुतः इन्द्राय सिच्यते मधु ॥ ५ ॥ समीची-
१ २ ३१२ ३१ २ २३ १२
ना अनूषत हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्रा
३१२ ३२ ३ २३१२३ १
य पीतये ॥ ६ ॥ [४] हिन्वन्ति सूरमुस्रयः स्व-
२ ३२३१२ ३१ २र ३१२
सारो जामयस्पतिम् । महामिन्दुं महीयुवः ॥१॥
१२ ३१२३ ३१ ३१२ ३२ ३१
पवमान रुचारुचा देव देवेभ्यः सुतः । विश्वा
२३१ २ १ २ ३२३२
वसून्या विश ॥ २ ॥ आ पवमान सुष्टुतिं वृष्टिं
३२३ १२३१ २ ३१२
देवेभ्यो दुवः इषे पवस्व संयतम् ॥ ३ [५]

इति सामवेदे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
द्वितीयः खण्डः ।

१२ ३१ २ ३ १२ ३ २ ३१२
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः
३२३ १२ ३१२ ३१ २ ३१२
सुविताय नव्यसे । घृतप्रतीको वृहता दिविस्पृशा

२ १  २र  ३ २ ३  १ २  १ २ ३
द्युमद्वि भाति भरतेभ्यः शुचिः ॥ १ ॥ त्वामग्ने
१ २ ३  १ २ ३ १ २र  ३ १ २र
अङ्गिरसो गुहा हितमन्वविन्दं छिश्रियाणं वने
१ २  ३ १ २ ३  १ २  ३ १  २र ३
वने । स जायसे मथ्यमानः सहो महत्त्वामाहुः
१ २  ३ १ २  ३ १ २ ३ १  २ ३ २ ३
सहसस्पुत्रमङ्गिरः ॥ १ ॥ यज्ञस्य केतुं प्रथमं पु-
१ २ ३ १  २र  ३ १  २र  १ २
रोहितमग्निं नरस्त्रिषधस्थे समिन्धते । इन्द्रेण
३ २  ३ २ ३  २  ३ २ ३ २ ३ १ ३ २र ३ १ २
देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय
३ १ २  ३ १ २  ३ १
सुक्रतुः ॥ २ ॥ [६] अयं वां मित्रावरुणा सुतः
२र  २उ ३ १  २ ३  १ २
सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ॥ १ ॥
१ २ ३ १ २  ३ १  २र  ३ २  ३ १ २
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण
२  ३ १  २  ३ १ २  ३ १
आशाते ॥ २ ॥ ता सम्राजा घृतासुती आदित्या
२र ३ ३ २  १ २ ३  १ २
दानुनस्पती । सचेते अनवह्वरम् ॥ ३ ॥ [७]
१ २  ३ २  ३ १ २ ३ १  २र  ३
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । ज-
१ २  ३ १  २र  ३ १ २र ३ २उ ३ १
घान नवतीर्नव ॥ १ ॥ इच्छन्नश्वस्य यच्छिरः प-
२ ३ १ २  १ २  ३ १ २  २उ
र्वतेष्वपश्रितम् । तद्विदच्छर्यणावति ॥ २ ॥ अ-

३ २ १ २ १ १ २ ३क २र १ २ १ १
आह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्र-
२ १ २ ३ १ २ ३ १ २र ३ १ २
मसो गृहे ॥ ३ ॥ [८] इयं वामस्य मन्मन इन्द्रा-
३ १ २ ३ २ ३ १ २
ग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ १ ॥
३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः। ईशाना
२ ३ १ २ १ २ ३ १ २ ३ १ २
पिप्यतं धियः ॥ २ ॥ मा पापत्वाय नो नरेन्द्रा-
३ १ २र १ २ ३ २
ग्नी माभिशस्तये । मा नो रीरधतं निदे ॥३॥ [९]
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो
३ २ ३ १ २ ३ १ २ ३ १ २ ३
वायवे मदः ॥ १ ॥ सं देवैः शोभते वृषा क-
२उ ३ १ २ ३ २ १ २ ३ १ २
विर्योनावधि प्रियः । पवमानो अदाभ्यः ॥ २ ॥
१ २ ३ २ ३ २ २उ ३ १ २
पवमान धिया हितो३ऽभि योनिं कनिक्रदत् ।
१ २ ३ १ २र ३ १ १ २
धर्मणा वायुमारुहः ॥३॥ [१०] तवाह५ सोम
३ १ २ ३ १ २ ३ १ २ ३ १
रारण सख्य इन्दो दिवेदिवे । पुरूणि बभ्रो नि
२ ३ १ २र ३ २उ ३ १ ३
चरन्ति मामव परिधी५ रति ता५ इहि ॥ १ ॥
२ ३ १ २र २र ३ १ २ ३ १ २ २ ३ २ ३ १ २
तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊध-

३ १ २र३२३ १ २३१ २३१ २
नि । घृणा तपन्तमति सूर्य्यं परः शकुना इव
२१ २ ३२उ १
पप्तिम ॥ २ ॥ [ ११ ] पुनानो अक्रमीदभि वि-
२ २३ १ २ ३२ ३ १२ ३१२
श्वा मृधो विचर्षणिः । शुम्भन्ति विप्रं धीतिभिः
१ २र३१ २३, २३२३ १२ ३२
॥ १ ॥ आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुत-
३ १ २र १२ ३२ ३१
म् । ध्रुवे सदसि सीदतु ॥ २ ॥नूनो रयिं महा
२ ३ १ २ ३ १ २ १ २
मिन्दोऽस्मभ्यं सोम विश्वतः । आ पवस्व
३ १ २
सहस्रिणम् ॥ ३ ॥ [१२]

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चमा-
ध्यायस्य चतुर्थः खण्डः ।

२ ३ १२ ३ १ २ ३ १ २ ३१ २ ३
पिबासोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्य्य-
१ २ ३ २३ २ ३ १ २३ १२ १ ३
श्वाद्रिः सोतुर्बाहुभ्याᳬ सुयतो नार्वा ॥ १ ॥ यस्ते
२ ३ २ ३ २३२ ३ १ २ ३ १ २ ३ १ २
मदो युज्यश्चारुरस्ति येन वृत्राणि हर्य्यश्व हᳬसि।
१ २र २ ३ १ २
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥ बोधा सु मे
३ २ ३ २उ ३ १२ ३ १ २ ३ १ २
मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्ति-
३ १ २र ३ १ २ २
म् । इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥ [१३] वि-

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
श्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं
३ १ २ ३ १ २ २ ३ १ २ ३ २ ३ १ २ ३ १
जजनुश्च राजसे । क्रत्वे वरे स्थेमन्यामुरीमुतोग्र-
२र ३ १ २ ३ १ २ ३ १ २ ३
मोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ नेमिं नमन्ति
१ २ ३ १ २र ३ १ ३ १ २ ३ २र
चक्षस मेषं विप्रा अभिस्वरे । सुदीतयो वो अद्रु-
३ १ २ ३ २ ३ १ २र १ २ ३
होऽपि कर्णे तरस्विनः समृक्वभिः ॥ २ ॥ समु रे-
१ २ ३ २ ३ १ २ ३ १ २ २र ३
भासो अस्वरन्निन्द्रं सोमस्य पीतये ॥ स्वःपति-
१ २ ३२ ३१ २३ १ २ ३ २ ३ १ २
र्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ३ ॥
१ २र ३ २उ ३ १ २ ३ १ २
[१४] यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
१ २ ३ १ २र ३ २ ३ १ २ ३ २
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा
३ २ २ ३ १ २ ३ १ २ ३ १ २
गृणे ॥ १ ॥ इन्द्रंतं शुम्भ पुरुहन्मन्नवसे यस्य
३ १ २ ३ १ २ १ २ ३ २ ३ १ २ ३
द्विता विधर्तरि । हस्तेन वज्रः प्रति धायि दर्श-
२ ३ २ ३ १ २र
तो महां देवो न सूर्यः ॥ २ ॥ [१५]

इति सामवेदे उत्तराग्रन्थस्य पञ्चमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २ ३
परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । स्वा-

१ २ ३ १ २ ३ १२ ३ १२ ३ १ २
नैर्याति कविक्रतुः ॥ १ ॥ स सूनुर्मातरा शुचि-
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
र्जातो जाते अरोचयत् । महान्मही ऋतावृधा
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
॥ २ ॥ प्र प्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।
३क २र ३ १ २ २ १ २ ३
वीत्यर्ष पनिष्टये ॥ ३ ॥ [१६] त्वꣳह्याꣳग दैव्य
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १
पवमान जनिमानि द्युमत्तमः अमृतत्वाय घोष-
२ ३ १ १ २ ३ १ २ ३ २उ ३ १
यन् ॥ १ ॥ येना नवग्वा दध्यङ्ङपोर्णुते येनवि-
२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
प्रास अपिरे । देवानाꣳ सुम्ने अमृतस्य चारुणो
३ २ ३ १ २ १ २ ३ २
येन श्रवाꣳस्याशत ॥ २ ॥ [१७] सोमः पुनान
३ २उ ३ २ ३ १ २ १ २ ३ १ २र
ऊर्मिणाव्यं वारं वि धावति । अग्रे वाचः पव-
३ १ २ ३ १ २ ३ २ ३
मानः कनिक्रदत् ॥ १ ॥ धीभिर्मृजन्ति वाजिनं
२३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
वने क्रीडन्तमत्यविम् । अभि त्रिपृष्ठं समस्व-
१ २ ३ १ २ ३ २ ३ २उ
रन् ॥ २ ॥ असर्जि कलशाꣳ अभि मीढ्वान्त्स-
३ १उ ३ १ २ ३ १ २र ३ १ २
प्तिर्न वाजयुः । पुनानो वाचं जनयन्नसिष्यदत् ॥
२ ३ ३ १ २ ३ १ २ ३ २
३ ॥ [१८] सोमः पवते जनिता मतीनां जनिता

३ १ २ ३ १ २ ३ २ १ १ २र ३ १
दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सू-
२र ३ १ २ ३ १ २र ३
र्य्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥ १ ॥ ब्र-
२ ३ १ २ ३ १ २ ३ २र ३ १ २ ३ २
ह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो
३ १ ३ ३ १ २र ३ १ २ ३ १ २ ३
मृगाणाम् । श्येनो गृध्राणाᳪ स्वधितिर्वनानाᳪ
१ २ ३ २ ३ १ २ ३ १ २ १ २ ३ २
सोमः पवित्रमत्येति रेभन् ॥ २ ॥ प्रावीविपद्वाच
३ २उ ३ २ ३ २ ३ १ २ ३ २
ऊर्मिं न सिन्धुर्गिर स्तोमान् पवमानो मनीषाः ।
३ १ २र ३ २ ३ १ २ ३ १ २ ३ १
अन्तः पश्यन्त् जनेमावराण्या तिष्ठति वृषभो गो-
२र ३ २
षु जानन् ॥ ३ ॥ [१९]

इति सामवेदे उत्तराग्रन्थस्य पञ्चमस्याध्या-

यस्य षष्ठः खण्डः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा
३ ३ १ २ ३ १ २र ३ २ ३ १ २
नप्त्रे सहस्वते ॥ १ ॥ अयं यथा न आभुवत्त्वष्टा
३ २ ३ १ २ ३ २र ३ १ २
रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥ २ ॥
३ १ २र ३ २उ ३ २ ३ १ २ २उ
अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते । आ
३ १ २ ३ १ २ ३ १
वाजैरुप नो गमत् ॥ ३ ॥ [२०] इममिन्द्र सुतं

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३क २र १
पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य त्वाभ्यक्षर-
१ २ ३ २ ३ १ २ २ ३ २ ३ १ २ ३
न्धारा ऋतस्य सादने ॥ १ ॥ न किष्ट्वद्रथीतरो
२ ३ १ २ ३ १ २ २ ३ १ २ ३ २ ३ २ ३
हरी यदिन्द्र यच्छसे । न किष्टानु मज्मना न किः
१ २ १ २ ३ १ २ ३ १ २
स्वश्व आनशे ॥ २ ॥ इन्द्राय नूनमर्चतोक्थानि
३ १ २ ३ १ २ ३ १ १ २
च ब्रवीतन । सुता अमत्सुरिन्दवो ज्येष्ठं नम-
३ १ २ १ २ ३ १ ३ २ ३ १
स्यता सहः ॥ ३ ॥ [२१] इन्द्र जुषस्व प्र वहा
२ ३ १ २ १ २ ३ १ २ ३ १ २र
याहि शूर हरिह । पिबा सुतस्य मतिर्न मधोश्च-
३ २उ ३ १ २ १ २ ३ २ ३ २ ३ २ ३ २
कानश्चारुर्मदाय ॥ १ ॥ इन्द्र जठरं नव्यं न पृण-
३ १ २ ३ २ ३ २ ३ २ ३ २ १ २ ३
स्व मधोर्दिवो न । अस्य सुतस्य स्वा३र्नोप त्वा
१ २ ३ १ २ १ २ ३ २ ३ २उ
मदाः सुवाचो अस्थुः ॥ २ ॥ इन्द्रस्तुराषाण्मित्रो
३ १ २ ३ २उ ३ २ ३ १ २ ३ २उ ३ १ २
न जघान वृत्रं यतिर्न । बिभेद वलं भृगुर्न स-
३ २उ ३ २ ३ १ २
साहे शत्रून्मदे सोमस्य ॥ ३ ॥ [२२]

इति तृतीयस्यार्द्धः प्रपाठकः ।

इति सामवेदे उत्तराग्रन्थे पञ्चमोऽध्यायः ।

षष्ठोऽध्याय आरभ्यते ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुव-
३ १ २ २ ३ १ २ १ २ ३
नेष्वर्पितः । त्वꣳ सुवीरो असि सोम विश्ववित्तं
३ २ ३ १ २ ३ १ २र २ ३ १ २
त्वा नर उप गिरेम आसते ॥ १ ॥ त्वं नृचक्षा
१ २ २ १ २ ३ १ २र
असि सोम विश्वतः पवमान वृषभ ता वि धा-
१ २ ३ १ २ ३ १ २ ३ १ २ १
वसि । स नः पवस्व वसुमद्धिरण्यवद्वयꣳ स्याम
१ २ ३ १ २ ३ २ ३ १ २र ३
भुवनेषु जीवसे ॥ २ ॥ ईशान इमा भुवनानि
१ २ ३ १ २ ३ १ २ ३क २र १ २
ईयसे युजान इन्दो हरितः सुपर्ण्यः । तास्ते क्ष-
३ १ २ ३ २उ ३ १ २ ३ २ ३ ३
रन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृ-
१ २ १ २ ३ २ ३ १ २
ष्टयः ॥ ३ ॥ [१] पवमानस्य विश्ववित्प्र ते सर्गा
१ २ ३ २ ३ १ २ ३ २ ३
असृक्षत । सूर्य्यस्येव न रश्मयः ॥ १ ॥ केतुं कृ
२ ३ २उ ३ १ २ ३ १ २ ३ १ २
ण्वं दिवस्परि विश्वा रूपाभ्यर्षसि । समुद्रः सो
३ १ २र ३ १ २
म पिन्वसे ॥ २ ॥ जज्ञानो वाचमिष्यसि पव-
३ १ २ १ २ ३ १ २र
मान विधर्मणि । क्रन्दं देवो न सूर्य्यः ॥ ३ ॥ [२]

१ २र ३ १ २ ३ १ २ ३
प्र सोमासो अधन्विषुः पवमानास इन्दवः। श्री
२ ३ १ २ ३ १ २र ३
णाना अप्सु वृञ्जते॥ १॥ अभि गावो अधन्वि
२ ३ २ ३ १ २ ३ २ ३ १ १र
षुरापो न प्रवता यतीः। पुनाना इन्द्रमाशत॥२॥
१ २ ३ १ २र १ २ १ २ ३ १
प्र पवमान धन्वसि सोमेन्द्राय मादनः। नृभिर्यतो
२र २ ३ १ २र ३ २ ३१ २ ३
वि नीयसे॥३॥ इन्दो यदद्रिभिः सुतः पवित्रं परि
१ २ २ ३ १ २ ३ १ २ १ २ ३ १ १ २
दीयसे। अरमिन्द्रस्य धाम्ने॥४॥ त्वं सोम नृमादनः
१ २ ३ १ २ २ ३ १ २ ३ १ २ १ २
पवस्व चर्षणीधृतिः। सस्निर्यो अनुमाद्यः॥५॥पव-
३ १ २ ३ १ २ ३ १ २ १ २ ३ १
स्व वृत्रहन्तम उक्थेभिरनुमाद्यः। शुचिः पावको
२र १ २ ३ १ २ ३ १ २ ३ १
अद्भुतः॥ ६॥ शुचिः पावक उच्यते सोमः सुतः स
२र ३ १ २ ३ २
मधुमान्। देवावीरघशंस हा॥ ७॥ [३]

इति सामवेद उत्तराग्रन्थस्य पञ्चमाध्यायस्य

प्रथमः खण्डः।

२ ३ २ ३ १ २ ३ २ २ १ २ ३ २
प्र कविर्देववीतयेऽव्या वारेभिरव्यत। साह्वान्वि-
२र ३ १ २र १ २र ३ २ ३ २उ
श्वा अभि स्पृधः॥ १॥ स हि ष्मा जरितृभ्य आ
३ १ २ ३ १ २ १२ ३ १ २
वाजं गोमन्तमिन्वति। पवमानः सहस्रिणम्॥२॥

२ १ ' १ २ ३ १ २ ३ २ ३ १ २ ३ २ १
परि विश्वानि चेतसा मृज्यसे पवसे मती । स
२ ३ १ २ ३क २र ३ १ २र
नः सोम श्रवो विद ॥ ३ ॥ अभ्यर्ष बृहद्यशो
३ १ २ ३ २ ३ २ १ २ ३ १ ३ १
मघवद्भ्यो ध्रुव॑ रयिम् । इष॑ स्तोतृभ्य आ
२ १ २र ३ १ २र ३ १ २
भर ॥ ४ ॥ त्व॑ राजेव सुव्रतो गिरः सोमाविवे-
३ १ २ १ २र ३ २ ३ १
शिथ । पुनानो वह्ने अद्भुत ॥ ५॥ स वह्निरप्सु दुष्ट-
३ ३ १ २ ३ १ २ ३ १ २ ३ १ २
रो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदती ॥६॥
३ २ ३ १ २र ३ २ ३ १ २
क्रीडुर्मखो न म॑हयुः पवित्र॑ सोम गच्छसि ।
१ २ ३ २ ३ १ २ १ २ ३
दधत्स्तोत्रे सुवीर्य्यम् ॥ ७ ॥ [४] यवं यवं नो
१ २ ३ १ २ ३ १ २ १ २ ३
अन्धसा पुष्टंपुष्टं परि स्रव । विश्वा च सोम
१ २ २ ३ २ ३ २ ३ २ ३ १ २ ३
सौभगा ॥ १ ॥ इन्दो यथा तव स्तवो यथा ते
२ ३ १ २ २ ३ १ २ ३ १ २ ३ १
जातमन्धसः । नि बर्हिषि प्रिये सदः ॥ २ ॥ उत
२ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३
नो गोविदश्ववित्पवस्व सोमान्धसा । मक्षतमेभि-
१ २ २ ३ २ ३ १ २र ३ २ ३ १
रहभि ॥ ३ ॥ यो जिनाति न जीयते हन्ति श-
२ ३ १ २ १ २
त्रुमभीत्य । स पवस्व सहस्रजित् ॥ ४ ॥ [५]

२ ३ १ २ ३ १ २र ३ १ २ १ २
यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये । ताभिः
३ २ ३ १ २ २ ३ १ २ ३ १ २ ३ १
पवित्रमासदः ॥ १ ॥ सो अर्षेन्द्राय पीतये तिरो
२र ३ १ २ १ २ ३ २ ३ २ ३ २ १
वाराण्यव्यया । सीदन्नृतस्य योनिमा ॥ २ ॥ त्वꣳ
२ ३ १ २ ३ १ २ ३ १ २ ३
सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः । वरिवोः
२ ३ २र
विद्घृतं पयः ॥ ३ ॥ [ ६ ]

इति सामवेदे उत्तराग्रन्थस्य

षष्ठस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

२ ३ १ २ ३क २र ३ २ ३ १ २ ३ १ २
तव श्रियो वर्ष्यस्येव विद्युतोऽग्ने श्चिकित्र उपसा-
३ १ २ १ २र ३ १ २ ३ १ २ ३ १ २ ३
मिवेतयः । यदोषधीरभिसृष्टो वनानि चपरि स्व-
१ २ ३ १ २र ३ १ २ १ २ ३
यं चिनुषे अन्नमासनि ॥ १ ॥ वातोपजूत इषि-
२उ ३ १ २ ३ २उ ३ १ २ ३ १ २ १
तो वशाꣳ अनुतृषु यदन्ना वेविषद्वितिष्ठसे । आ
२ ३ २ ३ २ २ ३ १ २ ३ १
ते यतन्ते रथ्योऽयथा पृथक्शर्धाꣳस्यग्ने अज-
२ १ १ २ ३ २ ३ १ २ ३ १
रस्य धक्षतः ॥ २ ॥ मेधाकारं विदथस्य प्रसाध-
२ ३ १ २र ३ १ २ २ २ १ २र ३
नमग्निꣳहोतारं परिभूतरं मतिम् । त्वामर्भस्य ह-
१ २ १ २उ ३ १ २ ३ २
विषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥३॥

३ १२ ३ १ २र ३ १ २ २
[ ७ ] पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मि-
१ २ २ ३ २ १ २ ३ १ २ ३
त्र वꣳसि वाꣳ सुमतिम् ॥१॥ ता वाꣳ सम्यगद्रुह्वा-
१ २ ३ १ २ ३ १ २
णेषमश्याम धाम च । वयं वां मित्रा स्याम ॥२॥
३ १ २ ३ १ २ ३ १ २ ३ २
पातं नो मित्रा पायुभिरुत त्रायेथाꣳ सुत्रात्रा ।
३ २ ३ १ २ ३ १ २ ३ २ ३
साह्याम दस्यूं तनूभिः ॥ ३ ॥ [ ८ ] उत्तिष्ठ-
१ २ ३ २ ३ १ २र १ २
न्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र
३ २ १ २ १ २ ३ १ २ ३ १ २र
चमू सुतम् ॥ १ ॥ अनु त्वा रोदसी उभे स्पर्धमा-
२ ३ १ २ ३ १ २ १ २ ३
नमददेताम् । इन्द्र यद्दस्युहाभवः ॥ २ ॥ वाचम-
१ २ ३ १ २र ३ १ २ २ ३ १ २ ३क २
ष्टापदीमहं नवस्रक्तिमृतावृधम् । इन्द्रात्परितन्वं
१ २ ३ २ ३ २ १
ममे ॥ ३ ॥ [ ९ ] इन्द्राग्नी युवामिमेऽभि स्तो-
१२र १ २ ३ २ २
मा अनूषत । पिबतꣳ शम्भुवा सुतम् ॥ १ ॥ या
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
वाꣳ सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्रा-
३ २ ३ १ २ २ ३ १ २ ३ २ ३
ग्नी ताभिरा गतम् ॥ २ ॥ ताभिरा गच्छतं नरोपे-
१ २र ३ २ १ २ ३ १ २
दꣳ सवनꣳ सुतम् । इन्द्राग्नी सोमपीतये ॥ ३ ॥ [१०]

## इति सामवेदे उत्तराग्रन्थस्य

## षष्ठस्याध्यायस्य तृतीयः खण्डः ।

१ २ ३ १ २ ३ १ २र ३ १ २ २
अर्पा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सी-
३ २ ३ २ ३ २ ३ १ २र ३ २ ३ १
दन्योनौ वनेष्वा ॥ १ ॥ अप्सा इन्द्राय वायवे व-
२ ३ १ २ १ २ ३ १ ३
रुणाय मरुद्भ्यः । सोमा अर्पन्तु विष्णवे ॥ २ ॥
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १
इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः । आ
२ ३ १ २ १ २ ३ २
पवस्व सहस्रिणम् ॥ ३ ॥ [ ११ ] सोम उ ष्वाणः
३ २ ३ २ ३ २ ३ १ २ १ २ ३ १ २
सोतृभिरधि ष्णुभिरवीनाम् । अश्वयेव हरिता या-
३ १ २ ३ १ २ ३ १ २ ३ २उ
ति धारया मन्द्रया याति धारया ॥ १ ॥ अनूपे
३ १ २ ३ १ २ ३ २ ३ २उ
गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः । समुद्रं
३ १ २ ३ १ २र
न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ २ ॥ [ १२ ]
१ २ ३ २ ३क २र ३ १ २र ३ १ २ १ २
यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नः
३ १ २र १ २ ३ १ २र ३
पुनान आ भरः ॥ १ ॥ वृषा पुनान आयूंषि स्त-
२ ३ १ २ ३ १ २ २ ३ २उ ३ १ २
नयन्नधि बर्हिषि । हरिः सन्योनिमासदः ॥ २ ॥

१ १ २र ३ १ २ ३ १ २ ३
युवꣳ हि स्थः स्वः पती इन्द्रश्च सोम गोपती । ई-
१ २ ३ १ २
शाना पिप्यतं धियः ॥ ३ ॥ [ १३ ]

इति सामवेदे उत्तराग्रन्थस्य
षष्ठस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

२ ३ १ २ ३ १ २ ३ १ ३र २उ
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः । तमि-
३ २ ३ २३ १ २र ३ १ २र ३ १ २
न्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽ
२ ३ १ ३ १ २उ ३ १ २
विषत् ॥ १ ॥ असि हि वीर सेन्योऽसि भूरि प-
३२ १ २ ३ १ २ ३ १ ३र
रादादिः । असि दभ्रस्य चिद्वृधो यजमानाय शिक्ष-
३ १ २र ३ १ २ २३ १ २ ३ १ २
सि सुन्वते भूरि ते वसु ॥ २ ॥ यदुदीरत आजयो
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३
धृष्णवे धीयते धनम् । युङ्क्ष्वा मदच्युता हरी-
३उ ३ १ २र ३ १ २ ३ १ २
कꣳ हनः कं वसौदधोऽस्माꣳ इन्द्रवसौ दध ॥ ३ ॥
३ २३ १ २ ३ १ २ २ ३ ३क
[ १४ ] स्वादोरित्था विषूवतो मधोः पिबन्ति गौ-
२र १ २र ३ १ २ ३ २ ३ १ ३ ३ २ ३
र्य्यः । या इन्द्रेण सयावरीर्वृष्णा मदन्तिशोभथा
२ ३ १ २ ३ १ १ २ १ २ ३ २ ३
वस्वीरनुस्वराज्यम् ॥ १ ॥ ता अस्य पृशनायुवः
१ २ ३ १ २ ३ १ २र ३ २ ३ १
सोमꣳ श्रीणन्ति पृश्नयः प्रिया इन्द्रस्य धेनवो व-

ज्रए हिन्वति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥
ता अस्य नमसा सहः सपर्य्यन्ति प्रचेतसः । व्रता-
न्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वरा-
ज्यम् ॥ ३ ॥ [ १५ ]
असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न
योनिमासदत् ॥१॥ शुभ्रमन्धो देववातमप्सु धौ-
तं नृभिः सुतम् । स्वदन्ति गावः पयोभिः ॥ २ ॥
आदीमश्वं न हेतारमशूशुभन्नमृताय । मधो रसं
सधमादे ॥ ३ ॥ [ १६ ] अभि द्युम्नं बृहद्यश इ-
षस्पते दिदीहि देव देवयुम् । वि कोशं मध्यमं
युव ॥ १ ॥ आ वच्यस्व सुदक्ष चम्वोः सुतो वि
शां वह्निर्न विश्पतिः । वृष्टिं दिवः पवस्व रीति
मपो जिन्वन् गविष्टये धियः ॥ २ ॥ [१७] प्राणा
शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा

१ २ ३ १ २३१२ ३ २ १२ ३१२ ३

परि प्रिया भुवदध द्विता ॥ १ ॥ उप त्रितस्य पा

२ १२३१ २र ३२ ३१२ ३१ २र ३

ष्योऽरभक्त यद्गुहा पदम्। यज्ञस्य सप्त धामभि

१२ ३ २ १२ ३२ ३ १२ ३१

रध प्रियम् ॥ २ ॥ त्रीणि त्रितस्य धारया पृष्ठे

२र ३ २ १२ ३ १ २३ २ ३१२

ष्वैरयद्रयिम्। मिमीते अस्य योजना वि सुक्रतुः

१२३ १ २ ३ २३ १२ ३

॥ ३॥ [१८] पवस्व वाजसातये पवित्रे धारया सु

२ १२ ३ १ २ ३२३ १२

तः। इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः

१ २ ३२३१२ ३ १ २ ३११

॥ १ ॥ त्वाᳲ रिहन्ति धीतयो हरिं पवित्रे अद्रुहः।

३ २ ३२उ ३ २३ १२ ३ १ २

वत्सं जातं न मातरः पवमाना विधर्म्मणि ॥ २ ॥

१ २र ३ १ २र १

त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे। प्र-

२ ३१२ ३ १२ १२

ति द्रापिममुञ्चथाः पवमान महित्वना ॥ ३॥

१ २ ३ १ ३ २ ३ ३ २३ २ ३ ३

[१९] इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः स

३ २ ३ १ २ २ ३ २३ १२ ३ १ २र ३ १

ह इन्वन्मदाय। हन्ति रक्षो बाधते पर्य्यरातिं व

२ ३ २ ३१२ ३ १२ ३ १ १ २ ३

रिवस्कृण्वन्वृजनस्य राजा ॥ १ ॥ अध धारया

१ २ ३२ ३१ २र ३ १ २ २

मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः। इ-

१ १ २ ३१ २३२ ३१ ३१२ ३१
न्द रिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो
२र ३२ ३१ २ ३ २ ३२
मदाय ॥ २ ॥ अभि व्रतानि पवते पुनानो देवो
३ २उ ३ १२र ३२ २३१२ ३ १ २र
देवांत्स्वेन रसेन पृञ्चन्। इन्दुर्धर्माण्यृतुथा वसा-
३ २३ १ २ ३ २ ३ १ २
नो दश क्षिपो अव्यत सानो अव्ये ॥ ३ ॥ [२०]

इति सामवेदे उत्तराग्रन्थस्य षष्ठस्या-
ध्यायस्य षष्ठः खण्डः।

१ २ ३१२ ३१२ २१
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्। यद्ध
२ ३ १ २ ३ २३ १ २३ १ २र ३ २
स्या ते पनीयसी समिद्दीदयति द्यवीषᳲ स्तोतृ-
३ १ २ १ २ ३२ ३२ ३
भ्य आ भर ॥ १ ॥ आ ते अग्न ऋचा हविः शु-
१ २ १ २ ३ २ ३ १ २ ३ १ २
क्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म विश्पते हव्य-
३ १ २ ३ १ २ ३ २ ३ १ २ १
वाट् तुभ्यᳲ हूयत इषᳲ स्तोतृभ्य आ भर ॥ २ ॥ ओभे
२र २ १२ ३ १ २ ३ २ ३
सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि। उतो न
१ २ ३१ २ ३ १ २ ३ २ ३ १
उत्पुपूर्या उक्थेषु शवसस्पत इषᳲ स्तोतृभ्य आ
२ १ २३ १ २ ३ १ २
भर ॥ ३ ॥ [२१] इन्द्राय साम गायत विप्राय
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
बृहते बृहत्। ब्रह्मकृते विपश्चिते पनस्यवे ॥ १ ॥

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्राभिभूरसि त्वꣳ सूर्य्यमरोचयः। विश्वक-
३ १ २ ३ १ २ ३ २ ३ १
र्म्मा विश्वदेवो महाꣳ असि ॥ २ ॥ विभ्राजं ज्यो-
२ ३ २ १ २ ३ २ ३ २ ३ १ २
तिषा स्वा३रगच्छो रोचनं दिवः। देवास्त इन्द्र
३ १ २ १ २ ३ १ २
सख्याय येमिरे ॥ ३ ॥ [२२] असावि सोम इन्द्र
३ १ २ ३ १ २ १ २ ३
ते शविष्ठ धृष्णवा गहि। आ त्वा पृणक्त्विन्द्रि-
२उ ३ २ ३ २ ३ १ २ १ २
यꣳ रजः सूर्य्यो न रश्मिभिः ॥ १ ॥ आ तिष्ठ वृत्र
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३
हन्रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते
२ ३ १ २ ३ १ २ २ ३ १ २र
मनो ग्रावा कृणोतु वग्नुना ॥ २ ॥ इन्द्रमिद्धरी
३ १ २ १ २ ३ १ २र
वहतोऽप्रतिधृष्टशवसम्। ऋषीणाꣳ सुष्टुतीरुप
३ २ ३ १ २
यज्ञं च मानुषाणाम् ॥ ३ ॥ [ २३ ]

इति तृतीयप्रपाठकः।

इति सामवेदे उत्तराग्रन्यस्य

षष्ठस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥

अथ चतुर्थप्रपाठकः।

१ २३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां ज-
३ २ ३ १ २ १ २ ३ १ २ ३ १ २ ३क २र
निता विभूवसुः। दधाति रत्नꣳ स्वधयोरपीच्यं

३ १ २ ३१ २ ३ १ २र
मदिन्तमो मत्सर इन्द्रियो रसः ॥ १ ॥
३ १ २ ३१२ ३क २र ३१२ ३२ ३१२
अभिक्रन्दन् कलशं वाज्यर्षतिपतिर्दिवः शतधारो
३२ १ २ ३२३ १ २ ३
विचक्षणः। हरिर्मित्रस्य सदनेषु सीदति मर्मृजा-
१ ३२ १ २ ३ १ २ २ ३ १ २ ३
नोऽविभिः सिन्धुभिर्वृषा ॥ २॥ अग्रे सिन्धूनां
१ २ ३ १ २ ३ १ २ ३ १ २र
पवमानो अर्षस्यग्रेवाचो अग्रियो गोषु गच्छसि।
२ ३ १ २ ३ १ २र ३ २ ३ १ २
अग्रे वाजस्य भजसे महद्धनꣳ स्वायुधः सोतृभिः
१ २ ३ २ ३ १
सोमः। सूयसे ॥ ३ ॥ [ १ ] असृक्षत प्र वाजि-
२ ३ १ २र ३ २ ३ १ २ ३ १
नो गव्या सोमासो अश्वया। शुक्रासो वीरयाश-
२र ३ १ २ ३ १ २ ३ १ २ ३ १
वः ॥ १॥ शुम्भमाना ऋतायुभिर्मृज्यमाना ग-
२ १ ३ ३ १ २ ३ १ २ १ २र
भस्त्योः। पवन्ते वारे अव्यये ॥ २ ॥ ते विश्वा
३ २ ३ २ ३ १ २ ३ २ ३ १ २ १ २ ३
दाशुषे वसु सोमा दिव्यानि पार्थिवा। पवन्ता-
१ २र १ २ ३१ २र ३
मान्तरिक्ष्या ॥ ३ ॥ [ २ ] पवस्व देववीरति प-
१ २ ३ १ २ १ २ ३ १ २र
वित्रꣳ सोम रꣳह्या। इन्द्रमिन्दो वृषा विश ॥ १॥
१ २ ३ २ ३ ३ १ २ ३ १ २
आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः।

१ २र ३ १ २ १ २ ३ २उ
आयोनिं धर्णसिः सदः ॥ २ ॥ अधुक्षत प्रियं म-
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
धु धारा सुतस्य वेधसः । अपो वसिष्ट सुक्रतुः ॥
३ १ २ ३ १ २र ३ १
॥ ३ ॥ महान्तं त्वा महीरन्वापो अर्षन्ति सि-
२ १ २र ३ १ २ ३ २ ३
न्धवः । यद्गोभिर्वासयिष्यसे ॥ ४॥ समुद्रो अ-
१ २ ३ २ ३ १ २ ३ २ १ २ ३ १
प्सु मामृजे विष्टम्भो धरुणो दिवः । सोमः पवि-
२ ३ २ १ २ ३ १ ३ १ २ ३ २ ३
त्रे अस्मयुः ॥ ५ ॥ अचिक्रदद्वृषा हरिर्महान्मि-
१ २र ३ २ १ ३ २र
त्रो न दर्शतः । सं सूर्येण दिद्युते ॥ ६ ॥ गि-
२ ३ १ २ ३ १ २ ३ १ २ २
रस्त इन्द्र ओजसा मर्मृजयन्ते अपस्युवः । या-
३ १ २ ३ १ २ २ ३ १ २ ३ १ २
भिर्मदाय शुम्भसे ॥ ७ ॥ तं त्वा मदाय घृष्वय
३ १ २ २ ३ १ २ ३ २ ३
उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥ ८ ॥ गो
१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २
पा इन्दो नृपा अस्यश्वसा वाजसा उत । आत्मा
३ १ २ ३ २ ३ १ २ ३ १ २र
यज्ञस्य पूर्व्यः ॥ ९ ॥ अस्मभ्यमिन्दविन्द्रियं मधोः
३ १ २ ३ १ २ ३ १
पवस्व धारया। पर्जन्यो वृष्टिमां इव ॥ १० ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य
सप्तमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥ [३]

१ २ ३ १२ ३ १२ ३ २३ १ २
सना च सोम जेषि च पवमान महि श्रवः ।
१ २ ३ १ २ २ ३ २ ३ २
अथा नो वस्यसस्कृधि ॥ १ ॥ सना ज्योतिः स
३ २ १ २ ३ १ २ १ २ ३ १ २
ना स्वार्विश्वा च सोम सौभगा । अथा नो वस्य
२ ३ १ २ ३ २उ ३ १ २ ३ १ २
सस्कृधि ॥ २ ॥ सना दक्षमुत क्रतुमप सोम मृधो
१ २ ३ १ २ १ २
जहि । अथा नो वस्यसस्कृधि ॥ ३ ॥ पवीतारः
३ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
पुनीतन सोममिन्द्राय पातवे । अथा नो वस्यस
१ २र ३ १ २ ३ २ ३ २ ३
स्कृधि ॥ ४ ॥ त्वꣳ सूर्य्ये न आ भज तव क्रत्वा
२ ३ १ २ १ २ ३ १ २ २ ३
तवोतिभिः । अथा नो वस्यसस्कृधि ॥ ५ ॥ तव
२ ३ २ ३ २ ३१ २ ३ १ २ १ २ ३
क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्य्यम् । अथा नो
१ २ ३क २र ३ १ २ ३ १ २
वस्यसस्कृधि ॥ ६ ॥ अभ्यर्ष स्वायुध सोम द्विबर्ह
३ २ १ २ ३ १ २ ३
सꣳ रयिम् । अथा नो वस्यसस्कृधि ॥ ७ ॥ अ
३ १ २ ३ १ २ ३ १ २ ३ २ १ २
भ्या३र्षानपच्युतो वाजिंत्समत्सु सासहिः । अथा
३ १ २ २ ३ १ २ ३ १ २
नो वस्यसस्कृधि ॥ ८ ॥ त्वां यज्ञैरवीवृधन् पवमा
३ १ २ १ २ ३ १ २ ३
न विधर्मणि । अथा नो वस्यसस्कृधि ॥ ९ ॥ र

१ २ ३ २ ३ २ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
यिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर। अथा
३ १ २ १ ३ २ ३ १ २
नो वस्यसस्कृधि ॥ १० ॥ [४] तरत्स मन्दी धाव
३ १ २ ३ १ ३ २ २ ३ २ ३ १ २
ति धरा सुतस्यान्धसः। तरत्स मन्दी धावति ॥ १ ॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३ १
उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्स मन्दी
२ ३ १ २ ३ २ ३ २ ३ १ २
धावति ॥ २ ॥ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि
२ ३ २ ३ १ २ १ २ र
दद्महे। तरत्स मन्दी धावति ॥ ३ ॥ आ ययो
३ २ ३ १ २ ३ १ २ ३ १ २ १ ३ २ ३ १
स्त्रिंशतं तना सहस्राणि च दद्महे। तरत्स मन्दी
२ ३ १ २ र ३ १
धावति ॥ ४ ॥ [५] एते सोमा असृक्षत गृणानाः
२ र ३ २ ३ १ २ ३ १ २ ३ १
शवसे महे। मदिन्तमस्य धारया ॥ १ ॥ अभि ग-
२ र ३ १ २ ३ १ ३ २ १ २ ३ १ २ ३
व्यानि वीतये नृम्णा पुनानो अर्षसि। सनद्वाजः
१ २ ३ २ ३ १ २ ३ २ ३ १ २
परि स्रव ॥ २ ॥ उत नो गोमतीरिषो विश्वा
३ १ २ ३ २ ३ १ ३
अर्ष परिष्टुभः। गृणानो जमदग्निना ॥ ३ ॥ [६]

इति सामवेदे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

३ २ उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा

२ १ २ ३ २उ ३ १ २ ३ १ २र
मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने
३ १ २र ३ १ २र १ २ ३ २ ३
सख्ये मा रिषामा वयं तव ॥ १ ॥ भरामेध्मं कृ-
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
णवामा हवीꣳषि ते चितयन्तः पर्वणापर्वणा वय
३ १ २ ३ १ २ ३ १ २र ३ १
म् । जीवातवे प्रतराꣳ साधया धियोऽग्ने सख्ये
२र ३ १ २र ३ १ २ ३ १ २
मा रिषामा वयं तव ॥ २ ॥ शकेम त्वा समिधꣳ
३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ १ २
साधया धियस्त्वे देवा हविरदन्त्याहुतम् । त्वमा
३ १ २र ३ २ १ २र ३ १
दित्याꣳ आ वह तान् ह्युꣳश्मस्यग्ने सख्ये मा
२र ३ १ २र १ २ ३ २ ३ १
रिषामा वयं तव ॥ ३ ॥ [७] प्रति वाꣳ सूर उ
२ ३ १ २ ३ १ २ ३ १ १ ३ १ २
दिते मित्रं गृणीषे वरुणम् । अर्य्यमणꣳ रिशाद
३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
सम् ॥ १ ॥ राया हिरण्यया मतिरियमवृकाय श्र
२ ३ १ २र ३ १ २ १ २
वसे । इयं विप्रा मेधसातये ॥ २ ॥ ते स्याम देव
१ १ २ ३ १ २ १ २ २ ३क २र
वरुण ते मित्र सूरिभिः सह । इषꣳ स्वश्च धीम
३ २उ ३ २ ३ २ ३ २ ३ १
हि ॥ ३ ॥ [८] भिन्धि विश्वा अप द्विषः परि बा-
२ ३ १ २र १ २ ३ १ २र १
धो जही मृधः । वसु स्पार्हं तदा भर ॥ १ ॥ य-

२ ३ १ २ ३ १ २र३२३ १ २ १ २ ३
स्य ते विश्वामानुषग्भूरेर्द्दत्तस्य वेदति। वसु स्पा-
१ २र २ ३ १ २ ३ २ ३ १
र्हं तदा भर ॥ २ ॥ यद्वीडाविन्द्र यत्स्थिरे यत्प-
२र३ १ २ १ २ ३ १ २र
र्शाने पराभृतम्। वसु स्पार्हं तदा भर ॥ ३ ॥ [९]
३ २ ३ २उ १ २ ३ २ ३ १ २ ३ १ २
यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्म्मसु।
१ २ ३ १ २ ३ १ २ ३ १
इन्द्राग्नी तस्य बोधतम् ॥ १ ॥ तोशासा रथया-
२ ३ १ २र १ २ ३ १ २
वाना वृत्रहणापराजिता। इन्द्राग्नी तस्य बोध-
३ १ २ ३ १ २र३ १ २ ३ १ २
तम् ॥ २ ॥ इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् ॥ ३ ॥ [१०]

इति सामवेदे उत्तराग्रथस्य सप्तमा
ध्यायस्य तृतीयः खण्ड.।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः। अर्कस्य
१ २३ १ २ २ ३ १ २ ३ २ ३ १
योनिमासदम् ॥ १ ॥ तं त्वा विप्रा वचोविदः प-
२ ३ २ १ २ ३ १ २
रिष्कृण्वन्ति धर्णसम्। सं त्वा मृजन्त्यायवः
१ २ ३ १ २ ३ १ २र३ १ २
॥ २ ॥ रसं ते मित्रो अर्य्यमा पिबन्तु वरुणः कवे।
१ २ ३ १ २ ३ १ २
पवमानस्य मरुतः ॥ ३ ॥ [११] मृज्यमानः सुह-

३ १ २र ३ २ ३ १ २ ३ १
त्व्या समुद्रे वाचमिन्वसि । रयिं पिशङ्गं बहुलं
२ ३ २ ३ १ २ ३क २र ३ २उ ३
पुरुस्पृहं पवमानाभ्यर्षसि ॥ १ ॥ पुनानो वारे
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पवमानो अव्यये वृषो अचिक्रदद्वने । देवानाᳬं
३ १ २र ३ १ २
सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २ ॥
३ २ ३ २उ ३ १ २ ३ २ ३ १ २
[१२] एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् ।
१ २ ३ १ २ १ २र ३ २ ३ १ २
समादित्येभिरख्यत ॥ १ ॥ समिन्द्रेणोत वायुना
३ १ २ ३ २ ३ २ १ २र ३ १ २
सुत एति पवित्र आ । सᳬं सूर्य्यस्य रश्मिभिः
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
॥ २ ॥ स नो भगाय वायवे पूष्णे पवस्व मधुमा-
१ २ ३ १ २र
न् । चारुर्मित्रे वरुणे च ॥ ३ ॥ [ १३ ]

इति सामवेदे उत्तराग्रन्थस्य
सप्तमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो
२ ३ १ २ २ ३ २ ३ १ २ ३ २ ३ १ २
याभि र्मदेम ॥ १ ॥ आ घ त्वावां त्मना युक्त स्तोतृभ्यो
३ २ ३ २उ ३ २ ३क २र १
धृष्णावीयानः । ऋणोरक्षं न चक्रोः ॥२॥ आ यद्दु -
२र ३ १ २र ३ २ ३ २उ ३ १
वः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न श-

२र १ २३१२ ३१२
चीभिः ॥ ३ ॥ [१४] सुरूपकृत्नुमूतये सुदुघामिव
३१२ ३ २३ १२ १२३ २
गोदुहे । जुहूमसि द्यविद्यवि ॥ १ ॥ उप नः स-
३१ २३ १२ १२उ ३
वना गहि सोमस्य सोमपाः पिब । गोदा इद्रे-
२३ १२ १२३ १२ ३१२
वतो मदः ॥ २ ॥ अथा ते अन्तमानां विद्याम
३२ २ ३ १२ ३ १ २
सुमतीनाम् । मा नो अति ख्य आगहि ॥ ३ ॥
३१ २र ३ १२ ३२३ १ २
[१५] उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
३१२ ३१२ ३१२ ३२ ३१
महान्तं त्वा महीना९ सम्राजं चर्षणीनाम् । देवि
२र ३१ २र ३१
जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १ ॥ दीर्घं
२३१ २३ २३ १२ १२
ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः । पूर्वेण म-
३२३२३१ २र ३१ २र
घवन्पदा वयामजो यथा यमः । देवी जनित्र्याजी-
३१ २र १२
जनद्भद्रा जनित्र्याजीजनत् ॥ २ ॥ अव स्म दुर्हृ-
३१ २र ३२ ३ १ २र
णायतो मर्त्तस्य तनुहि स्थिरम् । अधस्पदं तमीं
३२ ३१ २३१२ ३१ २र
कृधि यो अस्मा९ अभिदासति । देवी जनित्र्या-
३१ २र
जीजनद्भद्रा जनित्र्यजीजनत् ॥ ३ ॥ [१६]

## इति सामवेदे उत्तराग्रथस्य सप्तमस्याध्यायस्य पञ्चम खण्डः ॥ ५ ॥

परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्।
मदेषु सर्वधा असि ॥ १ ॥ त्वं विप्रस्त्वं कविर्म-
धु प्र जातमन्धसः। मदेषु सर्वधा असि ॥ २ ॥
त्वे विश्वे सजोषसो देवासः पीतिमाशत। म-
देषु सर्वधा असि ॥ ३ ॥ [१७] स सुन्वे यो वसू-
नां यो रायामानेता यइडानाम्। सोमो यः सु-
क्षितीनाम् ॥ १ ॥ यस्य त इन्द्रः पिबाद्यस्य म-
रुतो यस्य वार्य्यमणा भगः। आ येन मित्रावरु-
णा करामह एन्द्रमवसे महे ॥ २ ॥ [१८] तं वः
सखायो मदाय पुनानमभि गायत। शिशुं न ह-
व्यैः स्वदयन्त गूर्त्तिभिः ॥ १ ॥ सं वत्स इव मा-
तृभिरिन्दुर्हिन्वानो अज्यते। देवावीर्मदो मतिभिः
परिष्कृतः ॥ २ ॥ अयं दक्षाय साधनोऽयं श-

२र ३ १ २ ३ १ २ ३ १ २ ३ १
र्षाय वीतये । अयं देवेभ्यो मधुमत्तरः सुतः ॥ ३ ॥
१ २ ३ १ २ ३ १ २ ३ १ २
[१९] सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमः ।
३ २ ३ १ २ ३ १ २ ३क २र ३ १ २
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ १ ॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १
ते पूतासो विपश्चितः सोमासो दध्याशिरः । सू-
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
रासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ २ ॥
३ २ ३ १ २ ३ १ २ ३ १ २र ३ २ १
सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि । इ-
२ ३ १ २ ३ २ ३ १ २ ३ १ २
षमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ३ ॥ [२०]
३ २ ३ १ २ ३ १ २र ३ १ २३ १
अया पवा पवस्वैना वसूनि माꣳश्चत्व इन्दो स-
२ ३ १ २ १ २ ३ २ ३ २ ३ २ ३ १ २ ३
रसि प्रधन्व । ब्रध्नश्चिद्यस्य वातो न जूतिं पुरु-
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
मेधाश्चित्तकवे नरं धात् ॥ १ ॥ उत न एना प-
३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
वया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे । षष्टिꣳ
३ १ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय
२ ३ १ २ ३ २ ३ १ २ ३ १ २र ३
॥ २ ॥ महीमे अस्य वृष नाम शूषे माꣳश्चत्वे वा
१ २ ३ १ २ १ २ ३ १ २ ३ २ ३ २ ३
पृशने वा वधत्रे । अस्वापयन्निगुतः स्नेहयच्चापा-

२ ३ २ ३ १ २ ३ २
मित्राय अपाचितो अचेतः ॥ ३ ॥ [२१]

इति सामवेदे उत्तराग्रथस्य सप्तम
स्याध्यायस्य षष्ठः खण्डः ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो व-
३क २र १-२३ १ २र ३ १ २ ३
रूथ्यः ॥ १ ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्यु-
१ २ ३ १ २ १ २
मत्तमो रयिं दाः ॥ २ ॥ तं त्वा शोचिष्ठदीदिवः
३ १ २ ३ १ २ ३ १ २ ३ २उ
सुम्नाय नूनमीमहे सखिभ्यः ॥ ३ ॥ [२२] इमा
३ १ २ ३ १ २ ३ १ २ ३ २
नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ १ ॥
३ १ २ ३क २र ३ १ २ ३ १ २र ३ १ २
यज्ञं च नस्तन्वञ्च प्रजां चादित्यैरिन्द्रः सह सीष-
३ २उ ३ १ २ ३ १ २ ३ १ २
धातु ॥ २ ॥ आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं
३ १ २ १ २र
भेषजा करत् ॥ ३ ॥ [२३] प्र वोऽर्चे।प० ॥ [२४]

इति अर्द्धप्रपाठकः ।

इति सामवेदे उत्तराग्रन्थस्य सप्तम-
स्याध्याय सप्तमः खण्डः ॥ ७ ॥

इति चतुर्थस्यार्द्धः प्रपाठकः ।

अथाष्टमाध्याय आरभ्यते ।

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा

विवक्ति । महिव्रतः शुचिबन्धुः पावकः पदा व-
राहो अभ्येति रेभन् ॥ १ ॥ प्रहंसासस्तृपला व-
ग्नुमच्छामादस्तं वृषगणा अयासुः । अङ्गोषिणं प-
वमानं सखायो दुर्मर्षं वाणं प्र वदन्ति साकम्
॥ २ ॥ स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं
मिमते न गावः । परीणसं कृणुते तिग्मशृङ्गो दिवा
हरिर्ददृशे नक्तमृज्रः ॥ ३ ॥ प्र स्वानासो रथा इ-
वार्वन्तो न श्रवस्यवः सोमासो राये अक्रमुः ॥ ४ ॥
हिन्वानासो रथा इव दधन्विरे गभस्त्योः । भरा-
सः कारिणामिव ॥ ५ ॥ राजानो न प्रशस्तिभिः
सोमासो गोभिरञ्जते । यज्ञो न सप्त धातृभिः ॥ ६ ॥
परि स्वनास इन्दवो मदाय बर्हणा गिरा । मधो
अर्षन्ति धारया ॥ ७ ॥ आपानासो विवस्वतो
जिन्वन्त उषसो भगम् । सूरा अण्वं वि तन्वते ॥ ८ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २ २ ३
अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः वृष्णो
१२ ३ १ २ ३ १ २ ३ १ २
हरस आयवः ॥ ९ ॥ समीचीनास आशत होतारः
३१ २ ३ १ २२ ३ १ २ २ ३
सप्तजानयः । पदमेकस्य पिप्रतः ॥ १० ॥ नाभा
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
नाभिं न आ ददे चक्षुषा सूर्य्यं दृशे । कवेरपत्य
१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३
मा दुहे ॥ ११ ॥ अभि प्रियं दिवस्पदमध्वर्युभि-
१ २ ३ २ १ २ ३ १ २
र्गुहाहितम् । सूरः पश्यति चक्षसा ॥ १२ ॥ [१]

इति सामवेदे उत्तराग्रन्थस्य अष्टमा-

ध्यायस्य प्रथमः खण्डः ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः । वि-
१ २ ३ १ २ २ र ३ १ २ ३
दाना अस्य योजना ॥ १ ॥ प्र धारा मधो अग्रि-
२ ३ २ ३ १ २ र ३ २ ३ २ ३ १ २
यो महीरपो वि गाहते । हविर्हविषु वन्द्यः ॥२॥
२ ३ २ ३ १ २ ३ १ २ र ३ १ २ २
प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने । स-
३ २ १ १ २ ३ २ २ ३ १ २ र ३
द्मभि सत्यो अध्वरः ॥ ३ ॥ परि यत्काव्या क-
२ ३ १ २ ३ १ २ र २ ३ १ २
विर्नृम्णा पुनानो अर्षति । स्वर्वाजी सिषासति
१ २ ३ २ उ ३ २ ३ १ २
॥ ४ ॥ पवमानो अभि स्पृधो विशो राजेव सीदति

१२३ १ २३१२ २ १ २१
ति। यदीमृण्वन्ति वेधसः ॥ ५ ॥ अव्या वारे
१२ ३२उ ३१२ ३१ २ १
परि प्रियो हरिर्वनेषु सीदति। रेभो वनुष्यते म-
१ २ १ १ २१३१२ ३१ २र
ती ॥ ६ ॥ स वायुमिन्द्रमश्विना साकं मदेन ग-
२ ३ १ २३ १२ २ ३१
च्छति। रणा यो अस्य धर्मणा ॥ ७ ॥ आ मित्रे
२र ३२३ १२ ३१२ ३ १२ ३
वरुणे भगे मधोः पवन्त ऊर्मयः। विदाना अस्य
१ २ ३ १ २ १ २उ १
शक्मभिः ॥ ८ ॥ अस्मभ्यं रोदसी रयिं मध्वो
१ २ ३१२ २३ १२३ १२
वाजस्य सातये। श्रवो वसूनि सं जितम् ॥ ९ ॥
२ ३ १२ ३१३१२३ १ २ २ ३
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे। पान्त-
१ २३१२ २ ३ १ २र ३ २उ
मा पुरुस्पृहम् ॥ १०॥ आ मन्द्रमा वरेण्यमा वि-
३ १ २३१२ २ ३ १ २३ १२
प्रमा मनीषिणम्। पान्तमा पुरुस्पृहम् ॥ ११ ॥
२ ३ १ २र३२३१ २ ३२ २ ३१
आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा। पान्तमा
२३१२
पुरुस्पृहम् ॥ १२॥ [२]

इति सामवेदे उत्तराग्रंथस्य अष्टमा-

ध्यायस्य द्वितीयः खण्डः ॥ २ ॥

३१२ ३१ ३२१ २३१ १२३१२उ
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
ज़ातमग्निम् । कविंᳫं सम्राजमतिथिं जनानामा
२ ३ १ २ २ २ १ २र
सन्नःपात्रं जनयन्त देवाः ॥ १ ॥ त्वां विश्वे अमृ
३ १ २ ३ २ ३ २ ३२ ३ १ २र
त जायमानᳫं शिशुं न देवा अभि सं नवन्ते ।
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १
॥२॥नाभिं यज्ञानाᳫं सदनᳫं रयीणां महामाहावमभि
२र ३ २ ३क२र ३ १ २ ३ १ २ ३ १
सं नवन्त । वैश्वानरᳫं रथ्यमध्वराणां यज्ञस्यकेतुं
२ ३ २ १ २ ३ १ २ ३
जनयन्त देवाः ॥ ३ ॥ [३] प्र वो मित्राय गायत
१ २ ३ २ ३ २ १ २ ३ २ ३ २
वरुणाय विपा गिरो । महिक्षत्रावृतं बृहत् ॥ १ ॥
३ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २
सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा
३ १ २ ३ २ १ २ ३ १ २ ३
देवेषु प्रशस्ता ॥ २ ॥ ता नः शक्तं पार्थिवस्य म
२ ३ २ ३ १ २ १ २ ३२ ३ १ २
हो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ ३ ॥
१ २र ३ २ ३२ ३ १ २
[४] इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
१ २ ३ १ २ ३ १ २ १ २र ३ २ ३
अण्वीभिस्तना पूतास ॥ १ ॥ इन्द्रा याहि धियेषि
१ २र ३ १ २ २ ३ १ २ ३ १ २
तो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघत ॥२॥

१ २र ३ १ २ ३ २३ १२ ३
इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः। सु
१ २ ३ १ २ १ २ ३ २ ३
ते दधिष्व नश्चनः ॥ ३ ॥ [५] तमीडिष्व यो अ
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
र्चिषा वना विश्वा परिष्वजत्। कृष्णा कृणोति
३ १ २ २ ३ २ ३ १ २ ३ १ २र ३
जिह्वया ॥ १ ॥ य इद्ध आविवासति सुम्नमिन्द्रस्य
१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मर्त्यः। द्युम्नाय सुतरा अपः ॥ २ ॥ ता नो वाज
३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
वतीरिष आशून्पिपृतमर्वतः। एन्द्रमग्निं च वोढ
वे ॥ ३ ॥ [६]

इति सामवेदे उत्तराग्रन्थस्य अष्टमाध्यायस्य
तृतीयः खण्डः।

१ २ ३ २ ३ १ २ ३ २उ ३ २ ३ १
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न
२१ ३ १ २ १ २ ३ २ ३ १ २
प्र मिनाति सङ्गिरम्। मर्य्य इव युवतिभिः सम
३ १ २ ३ १ २ ३ १ २ ३ २ २
र्षति सोमः कलशे शतयामना पथा ॥ १ ॥ प्र
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १
वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवर-
२ २ ३ १ २ ३क २र ३ २ ३ २
णेष्वक्रमुः। हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि
३ २ ३ २ ३ १ २ १ २
धेनवः पयसेदशिश्रयुः ॥ २ ॥ आ नः सोम

३ १२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १
संयतं पिप्युपीमिषमिन्दो पवस्व पवमान ऊर्मि-
२ २ ३ १ २ ३ २ ३ ३ १ २ ३ १ २र
णा। या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाज-
३ १ २ ३ १ २ २ ३ १ २र २
वन्मधुमत्सुवीर्य्यम् ॥३॥[७]न किष्टं कर्मणा नश-
२ ३ १ २ ३ १ २ २ ३ २ ३ २ ३ १ २ ३ १ २
द्यश्चकार सदावृधम्। इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्व
३ १ २ ३ १ २र १ २ ३ १ २र
समधृष्टं धृष्णुमोजसा ॥ १ ॥ अषाढमुग्रं पृतनासु
३ १ २र ३ १ २ ३ १ २ २ ३ २ ३ १ २
सासहिं यस्मिन्महीरुरुज्रयः। सं धेनवो जायमा
३ २ ३ १ २
ने अनोनवुर्द्यावः क्षामीरनोनवुः ॥ २ ॥ [८]

इति सामवेदे उत्तराग्रन्थस्य अष्टमाध्यायस्य चतुर्थः खण्डः

१ २ ३ १ २र ३ २ ३ १ २ २
सखय आ नि षीदत पुनानाय प्र गायत। शि
३ २ ३१ २र ३ २ १ २ ३ २उ
शुं न यज्ञैः परि भूषत श्रिये ॥ १ ॥ समी वत्सं
३ १ २ ३ १ २ ३ १ २ ३ २ १
न मातृभिः सृजता गयसाधनम्। देवाव्या३ं म
२ ३ १ २र ३ १ २ ३ १ २ ३ २ ३
दमभि द्विशवसम् ॥ २ ॥ पुनाता दक्षसाधनं यथा
१ २ १ २ ३ २ ३ १ २ ३ १ २
शर्धाय वीतये। यथा मित्राय वरुणाय शन्तमम्
२ ३क २र ३ १ २ ३ २ ३ २
॥ ३ ॥ [९] प्र वाजयक्षाः सहस्रधारस्तिरः पवित्रं

त्वं वि वारमव्यम् ॥ १ ॥ स वाजयक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ २ ॥ प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमाणो अद्रिभिः सुतः ॥ ३ ॥

[१०] ये सोमासः परावति ये अर्वावति सुन्विरे। ये वादः शर्य्यणावति ॥ १ ॥ य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्। ये वा जनेषु पञ्चसु ॥ २ ॥ ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्य्यम्। स्वाना देवास इन्दवः ॥ ३ ॥ [११]

इति सामवेदे उत्तराग्रन्थस्य अष्टमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्। अग्ने त्वां कामये गिरा ॥ १ ॥ पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः। समत्सु त्वा हवामहे ॥ २ ॥ समत्स्वग्निमवसे वाजयन्तो हवामहे। वाजेषु चित्रराधसम् ॥ ३ ॥ [१२] त्वं न इन्द्रा भर

१ २ ३ १ २ २ ३१ २
ओजो नृम्णमा शतक्रतो विचर्षणे। आ वीरं पृ
३ १ २ १ २र ३ १ २ ३ २ ३
तनासहम् ॥ १ ॥ त्वं हि नः पिता वसो त्वं मा
१ २ ३ १ २ १ २ ३ १ २
ता शतक्रतो बभूविथ। अथा ते सुम्नमीमहे॥ २॥
१ २ ३ २ ३ १ २ ३
त्वां शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत स
२ ३ १ २ १ २
नो रास्व सुवीर्य्यम् ॥ ६ ॥ [१३] यदिन्द्र चित्र
३ २उ ३ १ २ २ ३ १ २ ३
मइंह नास्ति त्वादातमद्रिवः। राधस्तन्नो विदद्वस
३ १ २ १ २र ३ १ २३ १ २ ३
उभयाहस्त्या भर॥ १॥ यन्मन्यसे वरेण्यमिन्द्र द्यु
२ २र ३ २ ३ १ २ ३१ २र ३
क्षं तदा भर। विद्याम तस्य ते वयमकूपारस्य दा
१ २ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
वनः ॥ २ ॥ यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं
३ २ १ २ ३ १ २ ३ १ २र ३ १
बृहत्। तेन दृढा चिदद्रिव आ वाजं दर्षि सात
ये ॥ ३ ॥ [१४]

इति चतुर्थः प्रपाठकः।

इति सामवेद उत्तराग्रन्थस्य अष्टमाध्यायस्य

षष्ठः खण्डः

अथ पञ्चमः प्रपाठकः।

नवमोऽध्याय आरभ्यते।

१ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३
शिशुं जज्ञानꣳ हर्य्यतं मृजन्ति शुम्भन्ति विप्रं म
१ २ ३ १ २ ३ २ ३ १ २र ३ १ २र
रुतो गणेन । कविर्गीर्भिः काव्येन कविः संत्सोमः
३ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ २
पवित्रमत्येति रेभन् ॥ १ ॥ ऋषिमना य ऋषिकृ
३ २ ३ १ २ ३ १ २ ३ १ ३ २ ३ १
त्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् । तृतीयं धा
३ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
म महिषः सिषासंत्सोमो विराजमनु राजति ष्टुप्
३ २ ३ १ २ ३ १ ३ १ २ १ २ ३
॥ २ ॥ चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्र
१ २र ३ १ २ ३ २ ३ १ २र
प्स आयुधानि बिभ्रत् । अपामूर्मिꣳ सचमानः स
३ २ ३ २ ३ १ २ ३ १ २
मुद्रं तुरीयं धाम महिषो विवक्ति ॥ ३ ॥ [ १ ]
३ १ २र ३ २ ३ १ २र ३ १ २ १ २
एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् । वर्ध
३क २र ३ १ २ ३ २ ३ १ २
न्तो अस्य वीर्य्यम् ॥ १ ॥ पुनानासश्चमूषदो गच्छ
३ २ ३ १ २ १ २ ३ १ २
न्तो वायुमश्विना । ते नो धत्त सुवीर्य्यम् ॥ २ ॥
१ २ ३ १ २ ३ १ २र ३ २
इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय । देवा-
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
नां योनिमासदम् ॥ ३ ॥ मृजन्ति त्वा दश क्षिपो
२ १ २ ३ २ ३ १ २ २ ३ १ २
हिन्वन्ति सप्त धीतयः । अनु विप्रा अमादिषुः ॥४॥

३ १ २ ३ १ २ ३ १ २ ३ १ २र ३क २र १
देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः । सं
२र ३ २ ३ २ ३ १
गोभिर्वासयामसि ॥ ५ ॥ पुनानः कलशेष्वा व-
२र ३ १ २र २ ३ १ २ ३
स्त्राण्यरुषो हरिः । परि गव्यान्यव्यत ॥ ६ ॥ म-
२ ३ १ २ ३ २उ ३ २ ३ १ २ २
घोन आ पवस्व नो जहि विश्वा अप द्विषः । इ-
३ १ २ ३ १ २ ३ १ २ ३ १
न्दो सखायमा विश ॥ ७ ॥ नृचक्षसं त्वा वयमि-
२र ३ १ २ ३ २ ३ १ २
न्द्रपीतं स्वर्विदम् । भक्षीमहि प्रजामिषम् ॥ ८ ॥
२ २ ३ १ २र ३ १ २ ३ १ २र १
वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि । स-
२ ३ १ २
हो नः सोम पृत्सु धाः ॥ ९ ॥ [२]

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्यायस्य

प्रथमखण्डः ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३
सोमः पुनानो अर्षति सहस्रधारो अत्यविः । वा-
१ २र ३ २ ३ २ ३
योरिन्द्रस्य निष्कृतम् ॥ १ ॥ पवमानमवस्यवो
१ २ ३ १ २र ३ २ ३ १ २
विप्रमभि प्र गायत । सुष्वाणं देववीतये ॥ २ ॥
१ २ ३ १ २ ३ १ ३ ३ १ २ ३ २
पवन्ते वाजसातये सोमाः सहस्रपाजसः । गृणाना
३ १ २ २ २ ३ १ २ ३ १ २
देववीतये ॥ ३ ॥ उत नो वाजसातये पवस्व बृ-

१ २ २र ३ १ २ ३ १ २ १ २
हतीरिष । द्युमदिन्दो सुवीर्य्यम् ॥ ४ ॥ अत्या
२ ३उ ३ २ ३ १ २ ३ १ २ २उ ३ १
हियाना न हेतृभिरसृग्रं वाजसातये । वि वारम-
२ ३ १ २ ३ २ ३ १ २ ३ १ २र २
व्यमाशवः ॥ ५ ॥ ते नः सहस्रिणंरयिं पवन्ता-
२ ३ १ २ ३ २ ३ २ ३ १ २ ३
मा सुवीर्य्यम् । स्वाना देवास इन्दवः ॥ ६ ॥ वा-
१ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १
श्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः । दधन्विरे
२र २ ३ १ २ ३ १ २र ३ १
गभस्त्योः ॥ ७ ॥ जुष्ट इन्द्राय मत्सरः पवमानः क-
२ २ ३ २ ३ १ २ ३ २
निक्रदत् । विश्वा अप द्विषो जहि ॥ ८ ॥ अपघ्न-
३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
न्तो अराव्णः पवमानाः स्वर्दृशः । योनावृतस्य
सीदत ॥ ९ ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्याय-

स्य द्वितीयः खण्डः ॥ २ ॥

१ २ ३ १ २ ३२ ३ २३ १ १ १
सोमा असृग्रमिन्दवः सुता ऋतस्य धारया । इ-
२ ३ १ १ ३ १ २ ३
न्द्राय मधुमत्तमाः ॥ १ ॥ अभि विप्रा अनूषत
१ २ ३ २र ३ १ २ २ ३ १ २ ३ १ २
गावो वत्सं न धेनवः । इन्द्रं सोमस्य पीतये॥२॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १
मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् । सो-

२ ३ १ २र ३ २ ३ १ २र
मो गौरी अधि श्रितः ॥ ३ ॥ दिवो नाभा विच-
३ २ ३ १ २ १ २ २ ३ १ २ ३ २
क्षणोऽव्यावारे महीयते । सोमो यः सुक्रतुः कविः
१ २र ३ २ ३ २ ३ २ ३ २ ३ १ २
॥ ४ ॥ यः सोमः कलशेष्वा अन्तः पवित्र आहि-
२उ ३ १ २ २उ ३ १ २
तः । तमिन्दुः परि षस्वजे ॥ ५ ॥ प्र वाचमिन्दुरि-
३ १ २र ३ १ २ २ ३ १ २ ३
ष्यति समुद्रस्याधि विष्टपि । जिन्वन् कोशं मधु-
१ २ १ २ ३ २ ३ १ २ ३ २ ३ १
श्चुतम् ॥ ६ ॥ नित्यस्तोत्रो वनस्पतिर्धेनामन्तः
२ ३ १ २ ३ १ २र ३ २ १
सबर्दु घाम् । हिन्वानो मानुपा युजा ॥ ७ ॥ आ
२ ३ २ ३ १ २ ३ १ २
पवमान धारय रयिं सहस्रवर्चसम् । अस्मे इ-
३ १ २ ३ २ ३ २ ३ २ ३ २उ ३
न्दो स्वाभुवम् ॥ ८ ॥ अभि प्रिया दिवः कविर्विप्रः
१ २र ३ २ १ २ ३ १ २ २
स धारया सुतः । सोमो हिन्वे परावति ॥९॥ [४]

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्याय-

स्य तृतीयः खण्डः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः । वाण-
२ ३ २ ३ २ ३ १ २ ३ १
स्य चोदया पविम् ॥ १ ॥ प्रसवे त उदीरते तिस्रो
२र ३ १ २ २उ ३ २ ३ १ २
वाचो मखस्युवः । यदव्य एषि सानवि ॥ २ ॥

२ १ २ ३ १ २ ३ १ २र ३ १ २ १
अव्या वारैः परि प्रियꣳ हरिꣳ हिन्वन्त्यद्रिभिः।
१ २ ३ १ २ १ २
पवमानं मधुश्चुतम् ॥ ३ ॥ आ पवस्व मदिन्त-
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
म पवित्रं धारया कवे। अर्कस्य योनिमासदम् ॥४॥
१ २ ३ १ २ ३ २ ३ १ २ १
स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः। ए-
२ ३ १ २
न्द्रस्य जठरं विश ॥ ५ ॥ [५]

इति सामवेदे उत्तरोग्रन्थस्य नवमस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

३ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ १ २
अया वीती परि स्रव यस्त इन्दो मदेष्वा। अवाहन्न-
३ १ २र १ २ ३ २ ३ १ २ ३ १ २ ३ १
वतीर्नव ॥ १ ॥ पुरः सद्य इत्थाधिये दिवोदासाय श-
२ ३ १ २ ३ २ ३ १ २ १ २ ३ १ २
म्बरम्। अध त्यं तुर्वशं यदुम् ॥ २ ॥ परि नो अश्वम-
३ १ २र ३ १ २ १ २ ३ २ ३ १ २
श्वविद्गोमदिन्दो हिरण्यवत्। क्षरा सहस्रिणीरिषः
३ १ २ ३ २उ ३ २ ३ १ २
॥ ३ ॥ [ ६ ] अघ्नन् पवते मृधोऽप सोमो अरा-
२ ३ १ २ ३ २ ३ १ २ ३
व्णः गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥ महो नो रा-
१ २र३ १ २ ३ १ २र १ २ ३ २
य आ भर पवमान जही मृधः। रास्वेन्दो वीर-
३ १ २ १ २ ३ २ ३ २उ ३ २ ३ १
वद्यशः ॥ २ ॥ न त्वा शतं च न हुतो राधो दि-

२ १ १ १ १ २ ३ १ २ ३ १ २
स्सन्तमा मिनन्। यत्पुनानो मखस्यसे ॥ ३ ॥ [७]
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३
अया पवस्व धारया यया सूर्य्यमरोचयः। हिन्वा-
१ २र ३ १ १ २ ३ २ ३ १ २ ३ १ २
नो मानुषीरपः ॥ १ ॥ अयुक्त सूर एतशं पवमानो
३ १ २र ३ १ २ ३ १ २ २ ३उ
मनावधि। अन्तरिक्षेण यातवे ॥ २ ॥ उत त्या
३ २ ३ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
हरितो रथे सूरो अयुक्त यातवे। इन्दुरिन्द्र इति
३ २
ब्रुवन् ॥ ३ ॥ [८]

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्यायस्य
पञ्चमःखण्डः ॥ ५ ॥

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतम-
३ १ २ १ २र ३ १ २ ३ २ ३ १
ध्वरे कृणुध्वम्। यो मर्त्येषु निध्रुविर्ऋतावा त-
२ ३ १ २ ३ २ २ ३ २ ३ १
पुर्मूर्धा घृतान्नः पावकः ॥ १ ॥ प्रोथदश्वो न य-
२र ३ २ ३ २ ३ २ ३ १ २ ३ १ २ १ २ ३
वसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्। आदस्य
२ ३ १ २ ३ १ २र ३ १ २ ३ १
वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्ण-
२ १ २र ३ १ २ ३ २उ ३
मस्ति ॥ २ ॥ उद्यस्य ते नवजातस्य वृष्णोऽग्ने
१ २ ३ १ २ ३ २ ३ ३ १ २ ३ २ ३ १ ३
चरन्त्यजरा इधानाः। अच्छा द्यामरुषो धूम ए-

३ २ ३ १ २ ३ १ २ ३ २ ३ २ १
षि सं दूतो अग्न ईयसे हि देवान् ॥ ३॥ [९]त-
२र ३ २ ३ २ ३ १ २ १ २र ३ १
मिन्द्रं वाजयामसि महे वृत्राय हन्तवे। स वृषा वृषभो
२ २ ३ १ २र ३ १ २र ३ १ २र ३ २
भुवत्॥१॥इन्द्रः स दामने कृत ओजिष्ठः स बले हित.।
३ २ ३ २उ ३ २ ३ २उ ३ १
द्युम्नी श्लोकी स सोम्यः ॥ २ ॥ गिरा वज्रो न
२र ३ १ २ ३ १ २ ३ २ ३ १ २र
संभृतः सबलो अनपच्युतः । ववक्ष उग्रो अस्तृ-
तः ॥ ३ ॥ [१०]

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय ।
३ १ २ ३ १ २ २ ३ १ २ ३ १ २
पुनाहीन्द्राय पातवे ॥ १ ॥ तव त्य इन्दो अन्ध-
३ २उ ३क २र १ २ ३ १ २
सो देवा मधोर्व्याशत । पवमानस्य मरुतः ॥ २ ॥
३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३
दिवः पीयूषमुत्तमꣳ सोममिन्द्राय वज्रिणे । सु-
२ ३ १ २ ३ २ ३ १ २ ३ २ ३
नोता मधुमत्तमम्॥३॥[११] धर्ता दिवः पवतेकृत्व्यो
२ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३
रसो दक्षो देवानामनुमाद्यो नृभि. । हरिः सृजा-
२उ ३ १ २र ३ ३ १ २ ३
नो अत्यो न सत्वभिर्वृथा पाजाꣳसि कृणुषे न-

२ २ ३ १ २ ३ १ २ ३ १ २ ३
॥ १ ॥ शूरो न धत्त आयुधा गभस्त्योः
२ १ २ ३ १ २र १ २ ३ १ २ ३
स्वा३ः सिषासन्रथिरो गविष्टिषु । इन्द्रस्य शुष्ममी-
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः
१ २ ३ १ २ ३ १ २ ३ १
॥ २ ॥ इन्द्रस्य सोम पवमान ऊर्मिणा तविष्य-
२ ३ २ ३ १ २ १ २ ३ २ ३ २ ३
माणो जठरेष्वा विश । प्र नः पिन्व विद्युदभ्रेव
१ २ ३ ३ २ ३ २ ३ १ २ ३ १ २
रोदसी धिया नो वाजाꣳ उप माहि शश्वतः ॥ ३ ॥
१ २ ३ २उ ३ १ ३क २र ३ २ ३ १ २
[१२] यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
॥ १ ॥ यद्वा रुमे रुशमे श्यावके कृप इन्द्र मा-
१ २ ३ १ २ १ २ ३ १ २ ३ १ २ ३ १
दयसे सचा । कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इ-
२र ३ १ २ ३ १ २ ३ १
न्द्रा यच्छन्त्या गहि ॥ २ ॥ [१३] उभयꣳ शृण-
२ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २ ३
वच्च न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवा-
१ २ ३ १ २र ३ १ २ २उ
त्सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥ तꣳ
३ १ २ ३ १ २र ३ १ २ ३ १ २
हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।

१ २ ३ १ २   ३ १   २र ३   १ २   ३ २
उतोपमानां प्रथमो नि षीदसि सोमकाम꣡ꣳ हि
३ १ २
ते मनः ॥ २ ॥ [१४]

इति सामवेदे उत्तराग्रयस्य
नवमस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥

१ २   ३१ २ ३१ २र   ३ १ २   ३ १
पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः। वायुमा
२र ३ १ २   १ २ ३   १ २   ३ १   २
रोह धर्म्मणा ॥१॥ पवमान नि तोशसे रयिꣳ सोम
३ १ २   १ २   ३ १   २र   ३ १
श्रवाय्यम्। इन्दो समुद्रमा विश ॥ २ ॥ अपघ्न-
२ ३ १ २   ३ १ २   ३ १ २
न्पवसे मृधः० ॥ ३॥ [१५] अभी नो वाजसातम-
३१ २ ३१   २र ३   १ २
म्० ॥ १ ॥ वयं ते अस्य राधसो वसोर्वसो पु-
३ १ २   १   २र   ३१   २र ३ १ २
रुस्पृहः। नि नेदिष्ठतमा इषः स्याम सुम्ने ते अ-
२ ३ २   ३ १   २ ३ २ ३ २ ३
ध्रिगो ॥ २ ॥ परि स्य स्वानो अक्षरदिन्दुरव्ये
१ २   २ ३ २ ३ १   २ ३ २ ३ १
मदच्युतः। धारा य ऊर्ध्वो अध्वरे भ्राजा न या-
२र ३ २   १ २   ३ १
ति गव्ययुः ॥ ३ ॥ [१६] पवस्व सोम महान्त्-
२ ३ २ ३ २ ३ २ ३ ३ २ ३ १   २र   ३
समुद्रः पिता देवानां विश्वाभि धाम ॥ १ ॥ शु-
१ २   ३ १ २   ३ १ २ ३ १   २र ३
क्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्र-

१ २    ३ ४  ३१२ ३२  ३१२३१
जाभ्यः ॥ २ ॥ दिवो धर्तासि शुक्रः पीयूषः सत्ये
२र ३ १ २
विधर्मन्वाजी पवस्व ॥ ३ ॥ [१७]

इति सामवेद उत्तराग्रन्थस्य

नवमस्याध्यायस्य अष्टमः खण्डः ॥ ८ ॥

१२ ३ १ २   ३ २ ३ १ २   ३ २   २ ३
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्। अग्ने
२३ १ २र   ३ १ २  ३२ ३ २ ३ १२
रथं न वेद्यम् ॥ १ ॥ कविमिव प्रशंस्यं यं देवा-
३ १२ ३ २  १  २र ३ २   १ २
स इति द्विता। नि मर्त्येष्वादधुः ॥ २ ॥ त्वं य-
३ २ ३ १  २  ३ १  २र १ २ ३
विष्ठ दाशुषो नॄंः पाहि शृणुही गिरः। रक्षा तो-
२३१ २र  १ २  ३ १
कमुत त्मना ॥ ३ ॥ [१८] एन्द्र नो गधि प्रिय स-
२  ३ २उ ३ १ २  ३ १  २र ३ २
त्राजिदगोह्य। गिरिर्न विश्वतः पृथुः पतिर्दिवः
३ १ १ २र   ३ २ ३ २ ३ १ २
॥१॥ अभि हि सत्य सोमपा उभे बभूथ रोदसी।
१ २र ३ २ ३ १ ३ २र ३ २   १
इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ २ ॥ त्वं
२र ३ १ २  ३ २ ३ १ २र  ३ २उ
हि शश्वतीनामिन्द्र धर्ता पुरामसि। हन्ता
३ १ २ ३ १ २र ३ २  ३ २ ३
दस्योर्मनोर्वृधः पतिर्दिवः ॥ ३ ॥ [१९] पुरां भि-
१ २र ३ १ २र   २ ३ १ २
न्दुर्युवा कविरमितौजा अजायत। इन्द्रो विश्व

३' १२ ३२ ३१ २ ३२ २ ३२
स्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ १ ॥ त्वं वल-
१ २३१ २ ३ १२ २ ३१ ३२
स्य गोमतोऽपावरद्रिवो बिलम् । त्वां देवा अभि-
३ १२ २ ३ १ २ ३ १
भ्युपस्तुज्यमानस आविपुः ॥ २ ॥ इन्द्रमीशानमो-
२ ३ १ ३२ ३१३ १२ ३१२ ३२३
जसाभि स्तोमैरनूषत। सहस्रं यस्य रातय उत वा
२ ३ १२
सन्ति भूयसी ॥ ३ ॥ [२०]

इति अर्द्धप्रपाठकः

इति सामवेदे उत्तराग्रन्थस्य नवमस्याध्यायस्य

नवमः खण्डः।

इति पञ्चमस्यार्द्धः प्रपाठकः ॥

दशमोऽध्याय आरभ्यते।

१२ ३१ २३१ ३२ ३१२ ३१ ३२
अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य
२ २ १ २ ३२३ २३ २३ १२ ३१
गोपाः। वृषा पवित्रे अधि सानो अव्ये बृहत्सो-
३२ ३ १ ३२ १ २ ३२३२३
मो वावृधे स्वानो अद्रिः ॥ १ ॥ मत्सि वायुमिष्टये
१ २ २ १ २ ३ १ ३२३ १ २ २ ३
राधसे नो मत्सि मित्रावरुणा पूयमानः। मत्सि
२३ १२३१ २ ३ २उ ३ १ २ ३ १
शर्धो मारुतं मत्सि देवान् मत्सि द्यावापृथिवी
२ ३१ ३२ ३१२ १२
देव सोम ॥ २ ॥ महत्तत्सोमो महिषश्चकारापां य-

२र १२ १२३२३ १३ ३१
-द्रुगर्भोऽवृणीत देवान् अदधादिन्द्रे पवमान ओ-
२र ३२३ २ ३१२ १२३
जोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ३ ॥ [७] एष दे-
१ २र ३१२ ३१ २र ३
वो अमर्त्यः पर्णवीरिव दीयते । अभि द्रोणान्या-
१२ ३१ २र३१२३ २ ३१ २र
सदम् ॥ १ ॥ एष विप्रैरभिष्टुतोऽपो देवो वि गा-
२३१२ ३१२ ३१ २र ३ २
हते । दधद्रत्नानि दाशुषे ॥ २ ॥ एष विश्वानि वा-
३ २३ १२३ १२ १२
र्या शूरो यन्निव सत्वभिः । पवमानः सिषासति
३२ ३१ २ ३ २
॥ ३ ॥ एष देवो रथर्यति पवमानो दिशस्यति ।
३ १२ ३२ ३२ ३१ २३
आविष्कृणोति वग्वनुम् ॥ ३ ॥ एष देवो विप-
२ ३ १२ ३१ २ २३१ २
न्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते
३२ ३२ ३२ ३२ ३१२
॥ ५ ॥ एष देवो विपा कृतोऽतिह्वरांसि धावति ।
१२ ३ १२ ३२उ ३ १ २
पवमानो अदाभ्यः ॥ ६ ॥ एष दिवं वि धावति
३१ २र ३ १२ १२ ३ १२
तिरो राजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥
३२उ ३ १ २ ३२उ ३ १ २ १२
एष दिवं व्यासरत्तिरो रजांस्यस्तृतः । पवमानः
३२ ३२३२३ १ २ ३२ ३१ २
स्वध्वरः ॥ ८ ॥ एष प्रत्नेन जन्मना देवो देवेभ्यः

२२ १२ ३१२ ३२३ १
सुतः। हरिः पवित्रे अर्षति ॥ ९ ॥ एष उ स्य
२ ३१ २३२ ३२३१२ १२
पुरुव्रतो जज्ञानो जनयन्निषः। धारया पवते
३२
सुतः ॥ १० ॥ [२]

इति सामवेदे उत्तराग्रन्थस्य

दशमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

३२ ३२ ३२ ३ २३ १२ ३१२ २
एष धिया यात्यण्व्याशूरो रथेभिराशुभिः। ग-
३ १ २ ३२ ३२ ३१ २
च्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥ एष पुरु धियायते
३२ ३१२ २३१२ ३१ २ ३१
बृहते देवतातये। यत्रामृतास आशत ॥ २ ॥ एतं
२ ३ २३२३१२३१२ ३ २ ३१
मृजन्ति मर्ज्यमुप द्रोणेष्वायवः। प्रचक्राणं महो-
२र ३२३१ २र ३ २ ३१
रिषः ॥ ३ ॥ एष हितो वि नीयतेऽन्तः शुन्ध्या-
२ ३२ १२ ३२ ३ १२ ३२
वता पथा। यदी तुञ्जन्ति भूर्णयः ॥ ४ ॥ एष
३ १ २ ३२ ३१२३१२ २३
रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः। पतिः
१२३ १२ ३१ २र ३ १२३१
सिन्धूनां भवन् ॥ ५ ॥ एष शृङ्गाणि दोधुवच्छि-
३२ १२ ३ २ २र३ १२
शीते युथ्योऽ वृषा। नृम्णा दधान ओजसा
३१ २र ३ १ २र३ ३१
॥ ६ ॥ एष वसूनि पिब्दनः परुषा ययिवाँ अ-

२र २ ३ १ २ ३ २ ३ २उ
ति। अत्र शादेपु गच्छति ॥ ७ ॥ एतमु त्यं द-
३ २३ १२ ३ १ २ ३ २ ३ १
श क्षिपो हरिं हिन्वन्ति यातवे। स्वायुधं मदि-
२
न्तमम् ॥ ८ ॥ [ ३ ]

इति सामवेदे उत्तरग्रन्थस्य दशमा
ध्यायस्य द्वितीयः खण्डः ॥ २ ॥

३ २ ३ २उ २ २उ ३ १ २ २ ३
एष उ स्य वृषा रथोऽव्या वारेभिरव्यत। गच्छ-
१ २ ३ १ २ ३२ ३ २ ३ १ २ ३ १
न्वाजंसहस्रिणम् ॥ १ ॥ एतं त्रितस्य योषणो ह-
२ ३ १ २ २ ३ १ २ ३ १ २
रिंहिन्वन्त्यद्रिभिः। इन्दुमिन्द्राय पीतये ॥ २ ॥
३ १ २र ३ २ ३ २उ ३ १ २ १
एष स्य मानुषीष्वा श्येनो न विक्षु सीदति। ग-
२ ३ २उ ३ १ २ ३ २उ ३ १
च्छं जारो न योषितम् ॥ ३ ॥ एष स्य मद्यो र-
२र ३ १ २र २उ ३ २ ३ १ २
सोऽव चष्टे दिवः शिशुः। य इन्दुर्वारमाविशत् ॥ ४ ॥
३ २उ ३ १ २ ३ १ २र ३ २ २ ३
एष स्य पीतये सुतो हरिरर्षति धर्णसि। क्रन्द-
१ २ ३ २ ३ २ १ २उ ३ २ ३ १ २
न्योनिमभि प्रियम् ॥ ५ ॥ एतं त्यं हरितो दश
३ १ २ ३ १ २ २ ३ १ २ ३ १ २
मर्मृज्यन्ते अपस्युवः। याभिर्मदाय शुम्भते ॥ ६ ॥

इति सामवेदे उत्तराग्रयस्य

दशमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

१ २ ३ २ ३ १ २र ३ १ २र ३ १ २ २
एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः । अ-
३ २ ३ १ ३ १ २ ३ १ ३ ३
व्यं वार वि धावति ॥ १ ॥ एष पवित्रे अक्षर-
१ २ ३ १ २ ३ २ ३ २ १ २ ३ २
त्सोमो देवेभ्यः सुतः । विश्वा धामान्याविशन्
३ २ ३ १ २ ३ २ ३ २ ३ १ २
॥ २ ॥ एष देवः शुभायतेऽधि योनावमर्त्यः ।
३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १
वृत्रहा देववीतमः ॥ ३ ॥ एष वृषा कनिक्रदद्दश-
२ ३ १ २ ३ २ ३ १ २र
भिर्जामिभिर्यतः । अभि द्रोणानि धावति ॥ ४ ॥
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
एष सूर्य्यमरोचयत्पवमानो अधि द्यवि । पवित्रे
३ १ २र ३ १ २र ३ १ २
मत्सरो मदः ॥ ५ ॥ एष सूर्य्येण हासते सवसा-
३ १ २ १ २ ३ १ २र
नो विवस्वता । पतिर्वाचो अदाभ्यः ॥ ६॥ [५]

इति सामवेदे उत्तराग्रन्थस्य

दशमाध्यायस्य चतुर्थ खण्ड. ॥ ४ ॥

३२ ३ २ ३ १ २ ३ २ ३ १ २ ३
एष कविरभिष्टुतः पवित्रे अधि तोशते । पुनाः
२क ३ १ २ ३ १ २र ३ १ २ ३
नो घ्नन्नप द्विषः ॥ १ ॥ एष इन्द्राय वायवे स्वः
१ २र ३ १ २ ३ १ २ ३
र्जित्परि षिच्यते । पवित्रे दक्षसाधनः ॥ ८ ॥ ए-

२उ ३ १ २ ३ २ ३ १ २र३ २ २ ३
ष नृभिर्विनीयते दिवो मूर्धा वृषा सुतः। सोमो
१ २ ३ २ ३ २ ३ १ २ ३ १ २
वनेषु विश्ववित्॥ ३॥ एष गव्युरचिक्रदत्पवमा-
३ २ १ २ ३ १ २र ३
नो हिरण्ययुः। इन्दुः सत्राजिदस्तृतः॥ ४॥ ए-
२उ ३क २र ३ १ २ ३ २ ३ १ २ ३ २उ
ष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः। पुनान इ-
३ २ ३ १ ३ २ ३ १ २ ३ १ २ ३
न्दुरिन्द्रमा॥ ५॥ एष शुष्मादाभ्यः सोमः पुना-
१ २ ३ १ २ ३ ३
नो अर्षति। देवावीरघशंसहा॥ ६॥ [ ६ ]

इति सामवेदे उत्तराग्रन्थस्यदशमा
ध्यायस्य पञ्चमः खण्डः॥५॥

२ ३२ ३ २३१३ १२ ३१२ ३
स सुतः पीतये वृषा सोमः पवित्रे अर्षति। वि-
१ ३२र ३२ २ ३१२ ३१
घ्नन्रक्षांसि देवयुः॥ १॥ स पवित्रे विचक्षणो
२र ३ १ ३ २उ ३ १२
हरिरर्षति धर्णसिः। अभि योनिं कनिक्रदत्॥२॥
२ ३ १ २ ३२ ३१ २र ३ १ २
स वाजी रोचनं दिवः पवमानो वि धावति।
३ १ २र३ १२ २ ३२उ ३ १२
रक्षोहावारमव्ययम्॥ ३॥ स त्रितस्याधि सान-
३ १ २ ३ २ ३ १ २ ३ २
वि पवमानो अरोचयत्। जामिभिः सूर्यं सह
१ २३१ २र ३१ २ ३ १ २र
॥ ४॥ स वृत्रहा वृषा सुतो वरिवोविददाभ्यः।

२ ३ १ २ ३ ३२ ३ १ २ ३
सोमो वाजमिवासरत् ॥ ५ ॥ स देवः कविनेषि-
२ १ २र २ ३ १ २ ३ १ २
तोऽभि द्रोणानि धावति । इन्दुरिन्द्राय मंहयन्
न् ॥ ६ ॥ [७]

इति सामवेदे उत्तराग्रन्थस्य दशमा-
ध्यायस्य षष्ठः खण्डः ॥ ६ ॥

१ २ ३ २ ३ १ २र ३ १ २ ३ १ २ २
यः पावमानीरध्येत्यृषिभिः संभृतं रसम् । स-
३ २ ३ १ २ ३ १ २ ३ १ २
र्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ १ ॥
३ २उ ३ १ २र ३ १ २ ३ १ ३ २
पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् । त-
३ १ २ ३ २ ३ १ २र ३ २
स्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २ ॥
३ १ ३ १ २ ३ २ ३ १ २ ३ १ २
पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ ३ ॥
३ १ २ ३ २ ३ १ २र ३ २ २
पावमानीर्दधन्तु न इमं लोकमथो अमुम् । का-
३ १ २ ३ २ ३ २ ३ १ २ १
मान्त्समर्धयन्तु नो देवीर्देवैः समाहृताः ॥ ४ ॥ ये-
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १ २
न देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्र
३ १ २ ३ २
धारेण पावमानीः पुनन्तु नः ॥ ५ ॥ पावमानीः

२ १ २ ३ १ २ ३ २ १ २
स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् । पुण्यांऽश्च
३ १ २ ३ १ २
भक्षान्भक्षयत्यमृतत्वं च गच्छति ॥ ६ ॥ [८]

इति सामवेदे उत्तराग्रन्थस्य दशमा-

ध्यायस्य सप्तमः खण्डः ॥ ७ ॥

१ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ १ २ ३
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ १
स्वे दुरोणे । चित्रभानुं रोदसी अन्तरुर्वी स्वाहु-
३ १ २ ३ १ २ २ ३ १ २र ३
तं विश्वतः प्रत्यञ्चम् ॥ १ ॥ स मह्ना विश्वा दुरि-
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ १
तानि साह्वानग्निः ष्टवे दम आ जातवेदाः । स
२ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३
नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो म-
१ २ १ २र ३ २ ३ १ २ ३ १
घोनः ॥ २ ॥ त्वं वरुण उत मित्रो अग्ने त्वां
२ ३ २ ३ १ २ १ २र ३ १ २
वर्धन्ति मतिभिर्वसिष्ठाः । त्वे वसु सुषणनानि
३ १ २ ३ २ ३ १ २
सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥ [९]
३ २उ ३ १ २र ३ १ २ ३ १ २
महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
१ २ ३ १ २ २ ३ २ ३ १ २र ३
स्तोमैर्वत्सस्य वावृधे ॥ १ ॥ कण्वा इन्द्रं यदक्रत
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधा॥२॥

३१ ३२३ १२'३ १ २र३१२ १२ ३
प्रजामृतस्य पिप्रत. प्र यद्भरन्त वह्नयः । विप्रा ऋ-
२ ३ १ २
तस्य वाहसा ॥ ३ ॥ [१०]

इति सोमवेदे उत्तराग्रन्थस्य दशमा-
ध्यायस्य अष्टम. खण्ड. ॥ ८ ॥

१२ ३ १२३ १२३१ २ ३ १
पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत । जीरा
२ ३१२ १२ ३१२ ३१
अजिरशोचिषः ॥ १ ॥ पवमानो रथीतमः शुभ्रे-
२ ३१२ १२ ३१२
भिः शुभ्रशस्तम. । हरिश्चन्द्रो मरुद्गणः ॥ २ ॥
१२ ३क २र ३ २ ३ ३१२ १२३
पवमान व्यश्नु हि रश्मिभिर्वाजसातमः । दधत्-
२ ३१२ २३१ २ ३
स्तोत्रे सुवीर्य्यम् ॥ ३ ॥ [११] परीतो षिञ्चता सु-
२उ ३ १ २३२ ३२ ३ १ २र
तᳪ सोमो य उत्तमᳪ हविः । दधन्वाᳪ यो नर्य्यो
३ २ २र३ २३२ ३१२ ३१
अप्स्वाऽन्तरा सुषाव सोममद्रिभि. ॥ १ ॥ नूनं
२३१ २३ १२ ३१२ ३१२ ३
पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः । सु-
१ २ ३ १ २ ३ १२ ३२३ २३१
ते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरु-
२ १२ ३१ २र ३१२३ २३
त्तरम् ॥ २ ॥ परि स्वानश्चक्षसे देवमादनः क्रतु-
१२ २२ १२३ १२
रिन्दुर्विचक्षणः ॥ ३ ॥ [१२] असावि सोमो अ-

२ २उ ३ २ ३ १ २ ३ २ ३ १ २र
रूपो वृषा हरी राजेव दस्मो अभि गा अचिक्र-
२ २उ ३ १ २ ३ १ २ ३ १ २र
दत् । पुनानो वारमत्येष्यव्ययं श्येनो न योनिं
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतवन्तमासदत् ॥ १ ॥ पर्जन्यः पिता महिष्यस्य
२ २ ३ १ २ ३ २ ३ २ ३ १ २ १
पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे । स्व-
२ ३ १ २ ३ २उ ३ १ २ ३ १ २र
सार आपो अभि गा उदासरन्त्संग्रावभिर्वसते
३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
वीते अध्वरे ॥ २ ॥ कविर्वेधस्या पर्य्येषि माहि-
१ २ ३ २ ३ २ ३ १ २र ३ १ २
नमत्यो न मृष्टो अभि वाजमर्षसि । अपसेधं
३ १ २ ३ १ २र ३ १ २ १ ३
दुरिता सोम नो मृड घृतावसानः परि यासि नि-
१ २
र्णिजम् ॥ ३ ॥ [१३]

इति सामवेदे उत्तराग्रन्थस्य दशमा-
ध्यायस्य नवमः खण्डः ॥ ९ ॥

१ २ ३ २ ३ १ २र १ २
आयन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत । वसूनि
३ १ २र ३ १ २ ३ १ २ ३ १ १ २र
जातो जनिमान्योजसा प्रति भागं न दीधिमः
१ २ ३ १ २र ३ १ २र
॥ १ ॥ अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य
३ १ २ १ २ ३ १ २ ३ १ २र ३ १ २
रातयः । यो अस्य कामं विधतो न रोषति मनो

१ १ २ ३ १ २ १ २ ३ १ २ ३
दानाय चोदयन् ॥ २ ॥ [१४] यत इन्द्र भयामहे
१ २ ३ १ २ १ २ ३ २उ ३ १ २
ततो नो अभयं कृधि। मघवं छग्धि तव तन्न
१ २ ३ २उ ३ १ २र १
ऊतये वि द्विषो वि मृधो जहि॥ १ ॥ त्वँ हि
२र ३ १ २ ३ २उ ३ १ २ ३ २ १
राधसस्पते राधसो महः क्षयस्यासि विधर्त्ता। तं
२ ३१ २ ३ १ १
त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे
॥ २ ॥ [१५]

इति सामवेदे उत्तराग्रन्थस्य दशमा-

ध्यायस्य दशमः खण्डः ॥ १० ॥

१ २ ३ २ ३ १ २र ३ २ १
त्वँ सोमासि धारयुर्मन्द ओजिष्ठो अध्वरे। प-
२ ३ १ २ १ ३ २ ३ १ २ ३
वस्व मँहयद्रयिः॥१॥ त्वँ सुतो मदिन्तमो दध-
१ २ ३ १ २ १ २ ३ १ २र
न्वान्मत्सरिन्तमः। इन्दुः सत्राजिदस्तृतः ॥ २ ॥
१ २ ३ १ २र ३क २र ३ १ २ ३ २
त्वँ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्। द्युम-
३ २ ३ १ २ १ ३ ३ १ २ ३
न्तँ शुष्ममा भर ॥ ३ ॥ [१६] पवस्व देववीतय
२ ३ १ २ ३ १ २ २ ३ २ ३ १ २
इन्दो धाराभिरोजस। आ कलशं मधुमान्त्सोम
१ २ ३ १ २ ३ २ ३ २ ३ १ २
नः सदः ॥ १ ॥ तव द्रप्सा उदप्रुत इन्द्रं मदाय

२ ३१ २ ३१२ ३ १ २
वावृधुः । त्वां देवासो अमृताय कं पपुः ॥ २ ॥
१ २ ३ १ २ ३१
आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
३ १ २ ३ १ २ २ ३
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ ३ ॥ [१७] परि
१ २३१ २र ३ १ २ ३ १२ २ ३
त्यꣳ हर्य्यतꣳ हरिं बभ्रुं पुनन्ति वारेण । यो दे-
२उ ३ २उ ३ १२ ३१ २र २उ
वान्विश्वाꣳ इत्परि मदेन सह गच्छति ॥ १ ॥ द्वि-
३ १२ ३ १२ ३ १ २ ३ १
र्यं पञ्च स्वयशसꣳ सखायो अद्रिसंहतम् । प्रिय-
२र ३ १ २ ३ १२ ३ १ २ १
मिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥ २ ॥
१ २ ३ १ २ ३ १ २र १ २
इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे । नरे
३ १ २ ३ १२ ३ १ २ १
च दक्षिणावते वीराय सदनासदे ॥ ३ ॥ [१८] प-
२ ३ २उ ३ २ ३ २ ३ २ ३ १
वस्व सोम महे दक्षायाश्वो न निक्तो वाजी ध-
२र १ २ ३ २ ३ २ ३ १ २ ३ २ ३
नाय ॥ १ ॥ प्र ते सोतारो रसं मदाय पुनन्ति
१ २ ३ २ ३ १ २ १ २ ३ १ २र
सोमं महे द्युम्नाय ॥ २ ॥ शिशुं जज्ञानꣳ हरिं
३ २ ३ १ २ ३ २ ३ १ २
मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ ३ ॥ [१९]
२ ३ २ ३ २ ३ २ ३ १ २ १ २र १ २
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं

३ १ २ १ २र ३ १ २ ३
देवा अयासिषुः ॥ १ ॥ तमिद्वर्धन्तु नो गिरो व-
२ ३ १ २ २ २र ३ १ २
त्सᳬ सᳬशिश्वरीरिव । य इन्द्रस्य हृदᳬसनि ॥२॥
१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
१ २ ३ १ २
वर्धा समुद्रमुक्थ्य ॥ ३ ॥ [२०]

इति सामवेदे उत्तराग्रन्थस्य दशमा-

ध्यायस्य एकादश खण्डः ॥ ११ ॥

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
२ ३ २ ३ २ ३ १ २ ३ २उ ३ १ २
येषा मिन्द्रो युवा सखा ॥ १ ॥ बृहन्निदिध्म ए-
३ १ २ ३ २ ३ १ २र २ ३ २ ३ २ ३
षां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा
१ २ १ २ ३ २ ३ २उ ३ २ ३ १ २ ३
सखा ॥ २ ॥ अयुद्ध इद्युधा वृतᳬ शूर आजति
१ २ २ ३ २ ३ २ ३ १ २
सत्वभिः । येषामिन्द्रो युवा सखा ॥ ३ ॥ [२१]
२उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३
य एक इद्विदयते वसु मर्त्ताय दाशुषे । ईशानो
२ २ ३ १ २ ३ २ २ ३ १ २ ३ २
अप्रतिष्कुत इन्द्रो अङ्ग ॥ १ ॥ यश्चिद्धि त्वा बहु-
३ २ ३ १ २ ३ १ २ ३ १ २र ३
भ्य आ सुतावाᳬ आविवासति । उग्रं तत्पत्यते
२ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १
शव इन्द्रो अङ्ग ॥ २ ॥ कदा मर्त्तमराधसं पदा

२र ३१ २ ३ १२ १२
क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद्गिर इन्द्रो
२ २ १२ ३१ २र ३
अङ्ग ॥ ३ ॥ [२२] गायन्ति त्वा गायत्रिणोऽर्चन्त्य-
३ १२ ३१ २ ३ २३ १२
र्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव ये-
२र ३ १ २र ३ २र३ १
मिरे ॥ १ ॥ यत्सानोः सान्वारुहो भूर्यस्पष्ट क-
२ २उ ३ १२ ३१२ ३१२
र्त्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति
२ २उ ३ १ २ २३ १२ ३२
॥ २ ॥ युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
१ २ ३ १ २र
अथा न इन्द्र सोमपा गिरामुपश्रुतिंचर ॥ ३ ॥
[२३]

इति सामवेदे उत्तराग्रथस्य
दशमस्याध्यायस्य द्वादशः खण्डः ॥ १२ ॥

इति सप्तमः प्रपाठकः ।

अथ षष्ठप्रपाठकः ।

अथैकादशोऽध्याय आरभ्यते ।

१२ २ १ २ ३ १ २ ३१२
सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते ।
१ २ ३ १ २ १ २
होतः पावक यक्षि च ॥ १ ॥ मधुमन्तं तनूनपा-
३२ ३१२ ३१ २ ३१२
यज्ञं देवेषु नः कवे । अद्या कृणुह्यूतये ॥ २ ॥

२ ३ १   २ ३ २   ३ २ ३ २ ३ १   २र   १ २
नराशꣳसमिह प्रियमस्मिन्यज्ञ उप ह्वये । मधु-
३ २   ३ १ २   १ २   ३ १ २ ३ १ २
जिह्वꣳ हविष्कृतम् ॥ ३ ॥ अग्ने सुखतमे रथे
३ १   २ ३ १   २र   २ ३   २ ३ १ २
देवाꣳ ईडित आ वह । असि होता मनुर्हितः
२ ३२उ ३ २ ३ १ २   ३ १   २ ३ २
॥ ४ ॥ [१] यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।
३ १ २ . ३ १ २र   ३ १ २ ३ २उ ३
सुवाति सविता भगः ॥ १ ॥ सुप्रावीरस्तु स क्षयः
१ २र   २ ३ १ २   ३ १ २
प्र नु यामन्त्सुदानवः । ये नो अꣳहोऽतिपिप्रति
३ २ ३ २ ३ १ २ ३ १ २   ३ २ ३ २
॥ २ ॥ उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
३ १   २र   १ २   ३
महो राजान ईशते ॥ ३ ॥ [२] उ त्वा मन्दन्तु
१ २   ३ १   २र   १ २   ३ १ २
सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो
३ २ ३ १ २ ३ २ ३   १ २   ३ १
जहि ॥ १ पदा पणीनराधसो नि बाधस्व महाꣳ
२   २उ   ३   २ ३   १   २र   १ २
असि । न हि त्वा कश्च न प्रति ॥ २ ॥ त्वमी-
३ २ ३ १ ३   १ २र   २उ   ३
शिषे सुतानामिन्द्र त्वमसुतानाम् । त्वꣳ राजा
१ २
जनानाम् ॥ ३ ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य
एकादशमाध्यायस्य प्रथमः खण्डः ॥ ५ ॥

१ २र ३ १ २ ३ १ २ ३ १ २र ३ १
आ जागृविर्विप्र ऋतं मतीना॑ सोमः पुनानो
२ ३ १ २ १ २ ३ १ २ ३ २ ३ १ २
असदच्चमूषु । सपन्ति यं मिथुनासो निकामा अ-
२ १ २ २ १ २ ३ १ २ १ २ ३ २उ
ध्वर्य्यवो रथिरासः सुहस्ताः ॥ १ ॥ स पुनान
३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः ।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ २ ३
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे
१ २र १ २ ३ १ २र ३ १ २ ३
नप्रय॑ सत् ॥ २ ॥ स वर्धिता वर्धनः पूयमानः
१ २ ३ २ ३ २ ३ १ २ १ २ ३
सोमो मीढ्वा॑ अभि नो ज्योतिषावीत् । यत्र नः
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३
पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमि-
२ १ २ ३ १ २र ३ १ २ ३
ष्णन् ॥ ३ ॥ [४] मा चिदन्यद्वि श॑सत सखायो
१ २ २ ३ १ २ ३ १ २ ३ १ २ ३ १
मा रिषण्यत । इन्द्रमित्स्तोता वृषण॑ सचा सुते
२र ३ १ २ ३ १ २ ३ १
मुहुरुक्था च श॑सत ॥ १ ॥ अवक्रक्षिणं वृषभं
२ ३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
यथा जुवं गां न चर्षणीसहम् । विद्वेषण॑ संवन-
३ १ २ ३र ३ १ २ २ ३
नमुभयङ्करं म॑हिष्ठमुभयाविनम् ॥ २ ॥ [५] उदु
१ २र ३ २ ३ १ २ ३ १ २
त्ये मधुमत्तमा गिर स्तोमास ईरते । सत्राजितो

३ १ २र ३ २ ३ १ २ १ २
घनसा अक्षितोतयो वाजयन्तो रथा इव ॥१॥ कण्वा
३ १२३ १ २ ३ २ ३ २ ३ १ २
इव भृगवः सूर्य्या इव विश्वमिद्धीतमाशत ।
२ ३ १ २ ३१२ ३ १ २ ३१२
इन्द्रꣳ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अ-
२ ३ १ २र ३ १ २ ३
स्वरन् ॥ २ ॥ [६] पर्य्यू षु प्र धन्व वाजसातये
१ २ ३१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणया न
१ २ ३ १ २ ३ १ २ ३ २ ३
ईरसे ॥ १ ॥ अजीजनो हि पवमान सूर्य्यं विधारे
१ २ ३ १२ १ २ ३ १ २ ३ १ २
शक्मना पयः । गोजीरया रꣳहमाणः पुरन्ध्या ॥ १ ॥
२ ३ १ २ ३१ २ ३ १ २
अनु हि त्वा सुतꣳ सोम मदामसि० ॥ ३ ॥ [७]
२ ३ १ २ ३१ २र ३१ २र ३ २
परि प्र धन्व० ॥ १ ॥ एवामृताय महे क्षयाय स
३१ २ ३ २ ३ १ २ १ २
शुक्रो अर्ष दिव्यः पीयूषः ॥ २ ॥ इन्द्रस्ते सोम
३ १ २ ३ २ ३ १ २ ३ १ २ ३२
सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥ ३ ॥ [८]

इति सामवेदे उत्तराग्रन्थस्य

एकादशमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सूर्य्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः
३ १ २ १ २ ३ २उ ३ १ २ ३ २ ३
साकमीरते । तन्तुं ततं परि सर्गास आशवो

१ २ ३ १ २ ३ २ ३ २ ३ २ १ २ ३ २
नेन्द्राद्दते पवते धाम किं चन ॥ १ ॥ उपो मतिः
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
पृच्यते सिच्यते मधू मन्द्राजनी चोदते अन्तरा-
१ २ १ २ ३ १ २ ३ १ २ ३ १ २
सनि । पवमानः सन्तनिः सुन्वतामिव मधुमां
१ २उ ३ १ २ ३ १ २ ३ १ २
द्रप्सः परि वारमर्षति ॥ २ ॥ उक्षा मिमेति प्रति
३ १ २ ३ १ २ ३ १ २र ३ २
यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
१ २ ३ १ २ ३ १ २ ३ ३ २ ३ २ ३ २ ३ २उ ३
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि
१ २ २ २उ ३ १ २
सोमो अव्यत ॥ ३ ॥ [९] अग्निं नरो दीधिति-
३ २ ३ १ २ ३ १ ३ २ ३ १ २
भिररण्योर्हस्तच्युतं जनयत प्रशस्तम् । दूरेदृशं
३ १ २ ३ २ २ ३ २उ ३ १ २ ३क २र
गृहपतिमथव्युम् ॥ १ ॥ तमग्निमस्ते वसवो न्यृ-
३ २ ३ १ २ ३ १ २ ३ २ ३ २उ
ण्वंत्सुप्रतिचक्षमवसे कुतश्चित् । दक्षाय्यो यो
३ २ ३ १ २ १ २र
दम आस नित्यः ॥ २ ॥ प्रेद्धो अग्ने दीदिहि
३ १ २र ३क २र १ २र ३
पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त
१ २ ३ १ २ १
उप यन्ति वाजाः ॥ ३ [१०] आयं गौः
२र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रय

२ ३ १ २ ३ २उ ३ १ २
नत्स्वः ॥ १ ॥ अन्तश्चरति रोचनास्य प्राण द-
३ २ १ २र ३ १ २र ३ २उ
पानती । व्यख्यन्महिषो दिवम् ॥ २ ॥ त्रिंशद्धा-
३ १ २ ३ १ २ ३ १ २ २ ३
माम वि राजति वाक्पतङ्गाय धीयते । प्रति
२ ३ २ ३ १ २
वस्तोरह द्युभिः ॥ ३ ॥ [११]

इति अर्द्धप्रपाठकः ।

इति सामवेदे उत्तराग्रन्थस्य

एकादशमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ ॥

द्वादशोऽध्याय आरभ्यते ।

३ १ २ ३ १ २र ३ १ २ १ २
उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे
३ १ २ ३ २ १ २र ३ १
अस्मे च शृण्वते ॥ १ ॥ यः स्नीहितीषु पूर्व्यः
२ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
सञ्जग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥ २ ॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३
स नो वेदो अमात्यमग्नी रक्षतु शन्तमः । उतास्मान्पा
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
त्वंहसः ॥३॥ उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि
३ १ २र १ २ ३ १
धनञ्जयो रणेरणे ॥ ४ ॥ [१] अग्ने युङ्क्ष्वा हि ये तवा
२र ३ १ २ २ ३ १ २ ३ १ २ १ २
श्वासो देव साधवः । अरं वहन्त्याशवः ॥१॥ अच्छा नो

१ १ २ ३ १ २र ३ १ २ ३ ३ १ २र
याह्या वहाभि मय।ऽसि वीतये। आ देवांत्सोमपीतये
१ २ ३ १ २र ३ १ २ २ ३
॥२॥ उदग्ने भारत द्युमदजस्रेण दविद्युतत्। शोचा
१ २ १ २ ३ १ २र ३ २ ३
वि भाह्यजर ॥ २ ॥ [२] प्र सुन्वानायान्धसो मर्तो
१ २ ३ १ २र २ ३ १ २ ३ १ २ ३ २ ३ १
न वष्ट तद्वचः। अप श्वानमराधसं हता मखं
२र २ ३ १ २र ३ २ उ
न भृगवः ॥ १ ॥ आ जामिरत्के अव्यत भुजे न
३ २ ३क २र १ २ ३ १ २र ३ १
पुत्र। ओण्योः। सरज्जारो न योषणां वरो न
२र ३ १ २ २ ३ १ २ ३ १ २ ३ २उ
योनिमासदम् ॥ २ ॥ स वीरो दक्षसाधनो वि
३ २ ३ १ २ १ २ ३ १ २ ३ १
यस्तस्तम्भ रोदसी। हरिः पवित्रे अव्यत वेधा
२र ३ १ २
न योनिमासदम् ॥ ३ ॥ [३]

इति सामवेदे उत्तराग्रन्थस्य

द्वादशमोध्यायस्य प्रथमः खण्डः ॥ १ ॥

३ २ ३ १ २र ३ १ २ ३ १ २
अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनाद्-
३ १ २ ३ १ २ १ २ ३ १ २
सि। युधेदापित्वमिच्छसे ॥ १ ॥ न की रेवन्तं
३ १ २ ३ १ २ ३क २र ३ २ ३
सख्याय विन्दसे पीयन्तिते सुराश्वः। यदा कृ-
१ २ ३ १ २र ३ २र ३ १ २
णोषि नदनुं समूहस्यादित्पितेव हूयसे ॥ २ ॥

१ २ ३२३२ ३२ ३१ २र ३१
[४] आ त्वा सहस्रमा शतं युक्ता रथे हिरण्य-
२ ३२३ १२ ३२३ १२३ १२
ये। ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोम-
२ ३ १२ ३२३ १२ ३१२
पीतये॥१॥ आ त्वा रथे हिरण्यये हरी मयूर-
३ १ २ ३ २ ३ १ २ ३ १
शेप्या। शितिपृष्ठा वहतां मध्वो अन्धसो विव-
२ ३ १ २ २ ३ २ १ २
क्षणस्य पीतये॥२॥ पिबा त्वा३स्य गिर्वणः
३ १ २ ३ १ २ १ २ ३ १ २ ३ १ २
सुतस्य पूर्वपा इव। परिष्कृतस्य रसिन इयमा-
३ २र ३ १ २ १ २ ३
सुतिश्चारुर्मदाय पत्यते॥३॥ [५] आ सोता
१ २ ३ २ ३ १ २र ३ १ २ ३
परि षिञ्चताश्वं न स्तोमम्प्तुरं रजस्तुरम्। वन-
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रक्षमुदप्रुतम्॥१॥ सहस्रधारं वृषभं पयोदुहं
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
प्रियं देवाय जन्मने। ऋतेन य ऋतजातो वि-
३ १ २र ३ २ ३ २ ३ २
वावृधे राजा देव ऋतं बृहत्॥२॥ [६]

इति सामवेदे उत्तराग्रन्थस्य द्वादशमाध्यायस्य
द्वितीय खण्डः॥२॥

३ २ ३ १ २ ३ १ २ ३ १ २ १
अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। स-
२ ३ १ २र १ २ ३ २ ३ २ ३
मिद्धः शुक्र आहुतः॥१॥ गर्भे मातुः पितुष्पि-

१ २ ३ २ ३ १ २ १ २ ३ २ ३ २ ३ २
ता त्रिदिद्युतानो अक्षरे। सीदन्नृतस्य योनिमा ॥
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
२ ॥ ब्रह्म प्रजावदा भर जातवेदो विचर्षणे।
२ ३ २ ३ १ २ ३ २ ३ २ २ ३ २
अग्ने यद्दीदयद्दिवि ॥ ३ ॥ [७] अस्य प्रेषा हे-
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
मना पूयमानो देवो देवेभिः समपृक्त रसम्। सु-
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
तः पवित्रं पर्य्येति रेभन् मितेव सद्म पशुमन्ति
१ २ ३ १ २र ३ २ १ २ ३
होता ॥ १ ॥ भद्रा वस्त्रा समन्या३ वसानो म-
२ ३ २ ३ १ २ ३ १ २ १ २ ३क
हान्कविर्निवचनानि शंसन्। आ वच्यस्व च-
२र ३ १ २ ३ १ २र ३ १ २
म्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥ २ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १
क्षैतो अस्मे। अभि स्वर धन्वा पूयमानो यूयं
२ ३ २ ३ १ २ २ ३ २ ३
पात स्वस्तिभिः सदा नः ॥ ३ ॥ [८] एतो न्विन्द्रं
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १
स्तवाम शुद्धं शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वांसं
२ ३ २ ३ १ २ १ २ ३ २ ३
शुद्धैराशीर्वान्ममत्तु ॥ १ ॥ इन्द्र शुद्धो न
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
आ गहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं नि

धारय शुद्धो ममद्धि सौम्य ॥ २ ॥ इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ३ ॥ [९] अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ १ ॥ अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ २ ॥ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥ ३ ॥ [१०] अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशन्त वाणीः वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्य्याणि ॥ १ ॥ शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि । तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान् पृतनासु शत्रून् ॥ २ ॥ उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुर-

२ १ २र ३ २ ३ २ १ २र
न्वी । अपः सिषासन्नुषसः स्वा३र्गाः सञ्चिक्रदो
३ २ ३ २ ३ १ २ १ २ ३
महो अस्मभ्यं वाजान् ॥ ३ ॥ [११] त्वमिन्द्र य-
१ २ ३ १ २र ३ १ २ २ ३ १ २
शा अस्यृजीषी शवसस्पतिः । त्वं वृत्राणि हꣳ
३ २उ ३ २ ३ १ २ ३ १ २ १ २
स्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ १ ॥ तमु
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
त्वा नूनमसुर प्रचेतसꣳ राधो भागमिवेमहे । म-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हीव कृत्तिः शरणा त इन्द्र प्रते सुम्ना नो अश्नु-
१ २ ३ २ ३ २ १
वन् ॥ २ ॥ [१२] यजिष्ठं त्वा ववृमहे देवं देवत्रा
२र ३ १ २ १ २ ३ १ २ ३ १ २
होतारममर्त्यम् । अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥
३ १ २र ३ १ २ ३ १ २ ३ २ ३ १ २
अपां नपातꣳ सुभगꣳ सुदीदितिमग्निमु श्रेष्ठ-
१ २ ३ २ ३ १ २ ३ २ ३ २उ
शोचिषम् । स नो मित्रस्य वरुणस्य सो अपामा
३ १ २ ३ २
सुम्नं यक्षते दिवि ॥ २ ॥ [१३]

इति सामसूदे उत्तराग्रन्थस्य द्वाशाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

१ २ ३ २उ ३ २ ३ १ २ ३ २ ३ २ २उ ३
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जनाः । स यन्ता
१ २ ३ १ २ १ २ ३ १
शश्वतीरिषः ॥ १ ॥ न किरस्य सहन्त्य पर्येता

२१ १ २ ३ १ २ १
कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥ २ ॥ स
२१ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु
१ २ ३ १ २ ३ १ २ ३ २ ३
सनिता ॥ ३ ॥ [१४] साकमुक्षो मर्जयन्त स्वसारो दश
१ २ ३ २ ३ १ २ २ ३ १ २ ३ १ २१
धीरस्य धीतयो धनुत्रीः । हरिः पर्य्यद्रवज्जाः सूर्य्य-
३ १ २ ३ १ २ २ ३ २ २ ३ २ ३ १
स्य द्रोणं ननक्षे अत्यो न वाजी ॥ १ ॥ सं मातृभिर्न
२१ ३ १ २१ ३ १ २ ३ २ २ ३
शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः । मर्य्यो
१ २१ ३ १ २ ३ १ २१ ३ १ २ ३ १
न योषामभि निष्कृतं यतन्त्सं गच्छते कलश उस्रि-
२ ३ १ २१ ३ २ ३ १ २ ३ २ ३
याभिः ॥ २ ॥ उत प्र पिप्य ऊधरघ्न्याया इन्दु-
१ २ ३ २ २ २ ३ २ ३ १ २
र्धाराभि सचते सुमेधाः । मूर्धानं गावः पयसा
३ २ ३ १ २ ३ १ २ ३ २ ३ २
चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ ३ [१५]
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
३ १ २ ३ १ २ ३ २ १ २ ३
आपिर्नो बोधि सधमाद्यो वृधे३ऽस्माँ अवन्तु ते
१ २ ३ १ २ ३ २ ३ १ २ ३ १
धियः ॥ १ ॥ भूयाम ते सुमतौ वाजिनो वयं मा
२१ ३ १ २ ३ २ ३ १ २ ३ १ २
न स्तरभिमातये । अस्माँ चित्राभिरवतादभिष्टि-

२ १ २   २ १   २           १ २
गिरा नः सुम्ने पु यामय ॥ २ [१६] त्रिरस्मै
३ २ ३ १ २     ३ २ ३   १ २   ३ १ २
सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योम-
३ २ ३ १   २र   १ २ ३   १ २   ३
नि । चत्वार्य्यन्या भुवनानि निर्णिजे चारूणि चक्रे
२ ३ १ २र     १   २र   ३ १ २ ३ १ २
यदृतैरवर्धत ॥ १ ॥ स भक्षमाणो अमृतस्य चरुण
३ २उ   ३ १ २ ३   १   २     १ २   ३ २
उभे द्यावा काव्येना वि शश्रथे । तेजिष्ठा अपो
३ २ ३ १ २   ३   १ २   ३ २ ३   १ २ ३ १ २
मꣳहना परि व्यत यदी देवस्य श्रवसा सदो
३ २     १   २       ३ १   २र ३ १   २
विदुः ॥ २ ॥ ते अस्य सन्तु केतवोऽमृत्यवोऽदा-
  ३ १ २   ३ १   २र   १ २ ३ १   २ ३क २र
भ्यासो जनुषी उभे अनु । येभिर्नृम्णा च देव्या
३ १     २र   ३ १ २
च पुनत आदिद्राजानं मनना अगृभ्णत ॥ ३ ॥
[१७]

इति सामवेदे उत्तराग्रन्थस्य द्वादशमाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

२   २   ३ २   ३क २र     ३ २     २     ३ १   २र
अभि वपु वीत्यर्षा गृणानो३ऽभि मित्रावरुणा
३ १ २ ३   ३ १   २र ३ १ २     ३ २ ३ २ ३
पूयमानः । अभी नरं धीजवनꣳ रथेष्ठामभीन्द्रं
१ २ ३ १ २       ३ १   २र   ३ १ २
वृषणं वज्रबाहुम् ॥ १ ॥ अभि वस्त्रा सुवसनान्यः

२ २ ३ २ ३ १ २ ३ १ २ ३ २ ३१
प्राभि धेनूः सुदुघाः पूयमानः । अभि चन्द्रा भ-
२र ३ १ २ ३ १ २ ३ १ २
र्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ २ ॥
३ १ २ ३ १ २र ३ २उ ३ १ २
अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा
३ १ २ ३ २उ ३ १ २ ३ १ २ ३क २र ३ १
पूयमानः । अभि येन द्रविणमश्नवामाभ्यार्षेयं
२ ३ १ २ १ २र
जमदग्निवन्नः ॥ ३ ॥ [१८] यज्जायथा अपूर्व्य
१ २ ३ १ २ १ २ ३ १ २ ३ १ २
मघवन्वृत्रहत्याय । तत्पृथिवीमप्रथयस्तदस्तभ्ना
३ १ २र १ २ ३ १ २ ३ २ ३ २
उतो दिवम् ॥ १ ॥ तत्ते यज्ञो अजायत तदर्क
३ १ २र १ २र ३ १ २ ३ २ ३ २र ३
उत हस्कृतिः । तद्विश्वमभिभूरसि यज्जातं यच्च
१ २ ३ १ २ ३ १ २र ३ १ २र
जन्त्वम् ॥ २ ॥ आमासु पक्वमैरय आ सूर्य्यं रो-
३ २ ३ १ २र ३ २ ३ २ ३
हयो दिवि । घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं
१ २ ३ २ १ २र ३ २३
गिर्वणसे बृहत् ॥ ३ [१९] मत्स्यपायि ते महः
१ २ ३ २ २र १ २ ३ २ ३
पात्रस्येव हरिवो मत्सरो मदः । वृषा ते वृष्ण
३ २ ३ १ २ ३ १ २ १ २
इन्दुर्वाजी सहस्रसातमः ॥ १ ॥ आ नस्ते गन्तु
३ २उ ३ २ ३ १ २ ३ १ २
मत्सरो वृषा मदो वरेण्यः । सहावा इन्द्र सा-

३ १ २ ३ १ २र २३ ३ १ २
नसिः पृतनाषाडमर्त्यः ॥ २ ॥ त्वᳫं हि शूरः सनि-
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ २३
ता चोदयो मनुषो रथम् । सहावान्दस्युमव्रत-
३ २ ३ २ ३ १ २
मोषः पात्रं न शोचिषा ॥ ३ ॥ [२०]

इति द्वितीयोऽर्द्धप्रपाठकः ।

इति सामवेदे उत्तराग्रन्थस्य द्वादशा-

ध्यायस्य षष्ठः खण्डः ॥ ६ ॥

इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठकः ।

१ २ ३ २उ ३ २ ३ २ ३ १ २र ३
पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि । अ-
१ २ ३ १ २र १ २ ३ १ २ ३
यक्ष्मा बृहतीरिषः ॥ १ ॥ तया पवस्व धारया
२ ३ १ २ ३ १ २र १ २ ३ १ २ ३ १
यया गाव इहागमन् । जन्यास उप नो गृहम् ॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
२ ॥ घृतं पवस्व धारया यज्ञेषु देववीतमः । अ-
१ २ ३ १ २र १ २ ३ २ १ २
स्मभ्यं वृष्टिमा पव ॥ ३ ॥ स न ऊर्जे व्या३व्ययं
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
पवित्रं धाव धारया । देवासः शृणवन्हि क-
१ २ ३ १ २ ३ १ २
म् ॥ ४ ॥ पवमानो असिष्यदद्रक्षाᳫंस्यपजङ्घनत् ।
३ २ ३ २ ३ १ २ १ २ ३ १ २ ३
प्रत्नवद्रोचयन्रुचः ॥ ५ ॥ [१] प्रत्यस्मै पिपीषते
१ २ ३ १ २ ३ २ ३ २ ३ १
विश्वानि विदुषे भर । अरङ्गमाय जग्मयेऽपश्चा-

३ १२ १२ ३१२३ १२ ३
दध्वने नरः ॥ १ ॥ एमेनं प्रत्येतनं सोमेभिः सोम-
१२ १२ ३ २ ३१ २ ३२ ३१
पातमम्। अमत्रेभिर्ऋजीषिणमिन्द्रꣳ सुतेभिरि-
२ १२ ३२३ १२ ३ १२ ३
न्दुभिः ॥ २ ॥ यदी सुतेभिरिन्दुभिः सोमेभिः प्रति-
१२ २३ १२ ३ १२ ३२उ ३ १ २र
भूषथ। वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥३॥
३ १२ ३ २उ ३१ २ ३ १ २ ३२
अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम्।
३१ २ ३ १२३ १२३ १२ ३१
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत्
॥ ४ ॥ [२]

इति सामवेदे उत्तराग्रन्थस्य त्रयोदशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

३२३ १ २र ३१ २ ३१ २ २
बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे। सो-
१ ३१ २ १ ३ ३१ २ ३
माय गाथमर्चत ॥ १ ॥ हस्तच्युतेभिरद्रिभिः सु-
१ २र २ ३ १ २ ३ १ २
तꣳ सोमं पुनीतन। मधावा धावता मधु ॥ २ ॥
२ ३ १ २र ३ २ ३ १ १ २ ३ १
नमसेदुप सीदत दध्नेदभि श्रीणीतन। इन्दुमि-
२ ३ १ २र ३ १ २
न्द्रे दधातन ॥ ३ ॥ अमित्रहा विचर्षणिः पवस्व
३ १ २र ३ १ २ ३ २ १ २
सोम शं गवे। देवेभ्यो अनुकामकृत् ॥ ४ ॥ इन्द्रा-

२ १ २ ३ १ २ ३ १ २
य सोम पातवे मदाय परि षिच्यसे। मनश्चिन्म-
२र ३ १ १ २ ३ १ २ ३ १ २
नसस्पतिः॥२॥ पवमान सुवीर्य्यं रयिं सोम
२ ३ १ २ ३ २
रिरीहि णः। इन्दविन्द्रेण नो युजा॥६॥[३]
२उ ३ २ ३ १ २ ३ १ २र १ २
उद्घेदभि श्रुतामघं वृषभं नर्य्यापसम्। अस्ता-
२ ३ १ २ ३ १ २र ३ १ २
रमेषि सूर्य्य॥१॥ नव यो नवतिं पुरो विभेद
३क २र १ २ ३ १ २ २ ३
बाह्वोजसा। अहिं च वृत्रहावधीत्॥२॥ स न
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
इन्द्रः शिवः सखाश्वावद्गोमद्यवमत्। उरुधारेव
दोहते॥३॥[४]

इति सामवेदे उत्तराग्रन्थस्य त्रयोद-
शाध्यायस्य द्वितीयः खण्डः॥२॥

१२ ३१२ ३ २उ ३१ २ ३ १ २ ३ १
विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावि-
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १
विहुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः
२ ३ १ २र ३ २ ३ १
पिपर्ति बहुधा वि राजति॥१॥ विभ्राड्बृहत्सु-
२र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
भृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम्।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुर-

१ २ ३ २ ३१उ ३ १ २३ १ २
हा सपत्नहा ॥ २ ॥ इदᳫ्श्रेष्ठं ज्योतिषां ज्योतिरु-
३१ २३ १२३१२ ३२ ३ २ ३१उ
त्तमं विश्वजिद्धनजिदुच्यते बृहत् । विश्वभ्राड्भ्राजो
३ १ २ ३२३१ २ ३२३ २ ३ १ २
महि सूर्य्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥
२३ १२ ३ १ २ ३२ ३२३
३ ॥ [५] इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो
१२ १२ ३ १ २ ३ १२ ३ १
यथा । शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा
२र २ ३ १२ ३१२
ज्योतिरशीमहि ॥ १ ॥ मा नो अज्ञाता वृजना
३ २ १ २३१ २ १२ ३२ ३२३
दुराध्यो३ माशिवासोऽव क्रमुः त्वया वयं प्रवत
१ २ ३१ २ ३२
शश्वतीरपोऽति शूर तरामसि ॥ २ ॥ [६] अद्या-
३ २ ३ २३ १ २ ३१ २ १ २
द्या श्वःश्व इन्द्र त्रास्व परे च नः । विश्वा च नो
३ १ २ ३ २३ २३ १ २
जरितृन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥
६
३ १ २र ३१२ ३१२३ १२
१ ॥ प्रभङ्गी शूरो मघवा तुवीमघः संमिश्लो
३क २र ३ २ ३ १ २ ३ १ २र ३
वीर्य्याय कम् । उभा ते बाहू वृषणा शतक्रतो
१ २र ३१२
नि या वज्रं मिमिक्षतुः ॥ २ ॥ [७]

इति सामवेदे उत्तराग्रन्थस्य त्रयोदशा-
ध्यायस्य तृतीय खण्डः ॥ ३ ॥

३ २ ३ १ २ ३ १ २ ३१ २ १ २
जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सर-
३ १ २ ३ २ ३
स्वन्तᳪ हवामहे ॥ १ ॥ [८] उत नः प्रिया प्रि-
१ २ ३ १ २ ३ १ २ १ २ ३ १ २
यासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भू-
१ २ ३ १ २र ३ १ २ ३ १ २
त् ॥ १ ॥ [९] तत्सवितुर्वरेण्यं भर्गो देवस्य धी-
२ ३ १ २ ३ १ २ ३ २
महि । धियो यो नः प्रचोदयात् ॥ १ ॥ सोमा-
३ १ २ २ ३ १ २
नाᳪ स्वरणं० ॥ २ ॥ अग्न आयूᳪषि पवसे० ॥
१ २ ३ १ २ ३
३ ॥ [१०] ता नः शक्तं पार्थिवस्य० ॥ १ ॥ ऋ-
२ ३ २ ३ १ २ ३ १ १२ ३ १ २ ३ १ २
तमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ व-
३ १ २ ३क २र ३ २उ ३ १ २
र्द्धते ॥ २ ॥ वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।
३ २ ३ १ २ ३ १ २ ३ १
बृहन्तं गर्त्तमाशाते ॥ ३ ॥ [११] युञ्जन्ति ब्रध्न-
२ ३ १ २र ३ १ २ ३ १ २ १ २ ३ २ ३
मरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दि-
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
वि ॥ १ ॥ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३
शोणा धृष्णू नृवाहसा ॥ २ ॥ केतुं कृण्वन्नकेत-
२ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २
तवे पेशो मर्य्या अपेशसे । समुषद्भिरजायथाः
॥ ३ ॥ [१२]

इति सामवेदे उत्तराग्रन्थस्य
त्रयोदशाध्यायस्य चतुर्थः खण्ड ॥ ४ ॥

३ १ २र ३ १ २ ३ १ २ ३ १ २
अयᳲ सोम इन्द्र तुभ्यᳲ सुन्वे तुभ्यं पवते त्वम-
२ ३ १ २ ३ १ २र ३ २उ ३
स्य पाहि । त्वᳲ ह यं चकृष त्वं ववृष इन्दु
१ २ ३ १ २ ३ १ २ २ ३ २ ३ १
मदाय युज्याय सोममू ॥ १ ॥ स ईᳲ रथो न
२ ३ १ २ ३ २ ३ १ २ ३ १ ३ १ २ २
भूरिषाडयोजि महः पुरूणि सातये वसूनि । आ-
३ १ २ ३क १ ३ १ २ ३ १ २ ३ १
दीं विश्वा नहुष्याणि जाता स्वर्षाता वनं ऊर्ध्वा
२ ३ २उ ३ १ २र ३ १ २
नवन्त ॥ २ ॥ शुष्मी शर्धो न मारुतं पवस्वान
३ २उ ३ २ २ ३ २ ३ १ २
भिशस्ता दिव्या यथा विट् । आपो न मक्षू सु-
३ १ २ ३ १ २ ३ २उ ३ २
मतिर्भवा नः सहस्राप्साः पृतनाषाड्न यज्ञः ॥ ३ ॥

१ २ ३ २ ३ २ ३ १ २ ३ २
[१३] त्वमग्ने यज्ञानाᳲ होता विश्वेषाᳲ हितः ।
३ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ २
देवेभिर्मानुषे जने ॥ १ ॥ स नो मन्द्राभिरध्वरे
३ १ २ ३ २ २ ३ १ २ ३ १ २
जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
॥ २ ॥ वेत्था हि वेधो अध्वनः पथश्च देवाञ्ज-
१ २ ३ १ २ १ २ ३
सा । अग्ने यज्ञेषु सुक्रतो ॥ ३ ॥ [१४] होता दे-

१ २र ३ १ २ ३ १ २ ३ १ २
वो अमर्त्यः पुरस्ताद्देति मायया। विदथानि प्र-
३ १ २ ३ १ २र १ २ ३ १
चोदयन् ॥ १ ॥ वाजी वाजेषु धीयतेऽध्वरेषु प्र
२ १ २ ३ २ ३ १ २ ३ १ २
णीयते। विप्रो यज्ञस्य साधनः ॥ २ ॥ धिया च-
३ १ २ ३ २ ३ २ ३ १ २ १ २ ३ २
क्रे वरेण्यो भूतानां गर्भमा दधे। दक्षस्य पित-
३ १ २
रं तना ॥ ३ ॥ [१५]

इति सामवेदे उत्तराग्रन्थस्य
त्रयोदशाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १
आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम्। रसा
२ ३ २ १ २ ३ २ ३ २
दधीत वृषभम् ॥ १ ॥ ते जानत स्वमोक्या३ꣳ
२ ३ २ ३ २ ३ १ २ ३ १ २ ३
सं वत्सासो न मातृभिः। मिथो नसन्त जा-
१ २ २ ३ १ २ ३ १ २ ३ २ ३ १ २
मिभिः ॥ २ ॥ उप स्रक्वेषु बप्सतः कृण्वते धरुणं
३ २ १ २ ३ २उ ३क २र १
दिवि। इन्द्रे अग्ना नमः स्वः ॥ ३ ॥ [१६] तदि-
२र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
दास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः।
३ १ २ ३ १ २र ३ २ ३ २ ३ २उ ३ २
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे म-
३ १ २ ३ १ २र २ १ २ ३ १
दन्त्यूमाः ॥ १ ॥ वावृधानः शवसा भूर्योजाः श

२ ३ १ २ ३ १ २ १ २ ३ २ ३ २
न्यूर्दाशाय भियसं दधाति । अध्यनञ्च व्यनञ्च स-
३ १ २ ३ १ २ ३ १ २ २उ ३
स्त्रि सं ते नवन्त प्रभृता मदेषु ॥ २ ॥ त्वे क्रतु-
१ २ ३ २ ३ २उ ३ २उ ३ १ १ २
मपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
३ १ २र ३ १ २ ३ २ ३ २उ
स्वादोः स्वादीयः स्वादुना सृजा समदः सु म-
३ १ २ ३ १ ३ १ २
धु मधुनाभि योधिः ॥ ३ ॥ [१७] त्रिकद्रुकेषु म-
३ १ २र ३ २ ३ १ २र ३ १
हिषो यवाशिरं तुविशुष्म स्तृम्पत्सोममपिबद्वि-
२ ३ १ २ ३ २ १ २ ३ २ ३ २ ३
ष्णुना सुतं यथावशम् । स ईं ममाद महि कर्म
१ २ ३ ३ २ १ २र ३ २ ३ २ ३ १
कर्त्तवे महामुरुए सैनए सश्चद्देवो देवए सत्य इ-
२र ३ १ २र २ ३ ३ १ २र ३
न्दुः सत्यमिन्द्रम् ॥ १ ॥ साकं जातः क्रतुना सा-
१ २र ३ २ ३ २ ३क २र ३ २उ
कमोजसा ववक्षिथ साकं वृद्धो वीर्य्यैः सासहि-
३ १ २ २ ३ १ २ ३ २उ ३
र्मृधो विचर्षणिः । दाता राध स्तुवते काम्यं
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २र
वसु प्रचेतन सैनए सश्चद्देवो देवए सत्य इन्दुः
३ १ २र २ ३ १ २ ३ १ २ ३
सत्यमिन्द्रम् ॥ २ ॥ अध त्विषीमाए अभ्योजसा
१ २ ३ १ २ ३ १ २र १ २ ३
क्रिविं युधाभवदा रोदसि अपृणदस्य मज्मन..

१ २     १ २ ३ २ ३ २ ३ १ २   ३ १ २ ३
प्र वावृध । अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय
१ २   ३ २ ३ २ ३ १ २र ३ १ २र
सैनᳫं सश्चद्देवो देवᳫं सत्य इन्दुः सत्यमिन्द्रम्
॥ ३ ॥ [१८]

इति षष्ठः प्रपाठकः ।

इति सामवेदे उत्तराग्रन्थस्य

त्रयोदशाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

इति षष्ठः प्रपाठकः ॥ ६ ॥

अथ सप्तमः प्रपाठकः ।

अथ चतुर्दशोऽध्याय आरभ्यते ।

सप्तमप्रपाठकस्य प्रथमार्द्धम् ।

३ १   २र ३ १ २ ३ १ २ ३ २   ३ २
अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुᳫं
३ २ ३ १ २   १ २र ३ १ २
सत्यस्य सत्पतिम् ॥ १ ॥ आ हरयः ससृज्रिरेऽरुः
३ १ २ ३ १ २   २ ३ २ ३ १ २   १
षीरधि बर्हिषि । यत्राभि सन्नवामहे ॥ २ ॥ इ-
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ १ २
न्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु । यत्सी-
२ २ ३ २   २ ३ १ २ ३ २ ३
मुपह्वरे विदत् ॥ ३ ॥ [१] आ नो विश्वासु हव्यः
१ २ ३ १ २   २ ३ १ २ ३ १ २
मिन्द्रᳫं समत्सु भूषत । उप ब्रह्माणि सवनानि
३ १ २   २ ३ २
वृत्रहन् परमज्या ऋचीषम ॥ १ ॥ त्वं दाता

३ २ १ २र ३ १ २ ३ १ २ ३ २ ३
प्रथमो राधसामस्यसि सत्य ईशानकृत् । तुवि-
२ ३ १ २र ३ २ ३ १ २ ३ २
द्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥
३ २ ३ १ २ ३ २उ ३क २र ३ २ ३ २
२ ॥ [२] प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहा-
३ १ २र १ २ ३ १ २र ३ १ २
द्दिव आ निरधुक्षत । इन्द्रमभि जायमान९ सम-
२ ३ २ ३ १ २ ३ १ २
स्वरन् ॥ १ ॥ आदीं के चित्पश्यमानास आप्यं
३ १ २ ३ २ १ ३क २र ३ १ २र
वसुरुचो दिव्या अभ्यनूषत । दिवो न वार९ स-
३ १ २ २ ३ २ ३ १ २ ३ १ २
विता । व्यूर्णुते ॥ २ ॥ अध यदिमे पवमान रोद-
३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २उ
सी इमा च विश्वा भुवनाभि मज्मना । यूथे न
३ १ २ ३ १ २र ३ २ ३ २उ
निष्ठा वृषभो वि राजसि ॥ ३ ॥ [३] इममू षु
२ १ २ ३ १ २ ३ १ २र १ २ ३
त्वमस्माक९ सनिं गायत्रं नव्या९सम् । अग्ने दे-
२ ३ १ २ ३ १ २ ३
वेषु प्र वोचः ॥ १ ॥ विभक्तासि चित्रभानो सि-
२ ३ १ २ ३ २ ३ २ ३ १ २
न्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥ २ ॥
१ २ ३ १ २र ३ १ २ २ ३
आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा
२ ३ १ २ ३ २उ ३ १ २र
वस्वो अन्तमस्य ॥ ३ ॥ [४] अहमिद्धि पितुष्परि

१ २ ३१ २ ३ १ २ ३ १ २र
मेधामृतस्य जग्रह । अहं सूर्य्य इवाजनि ॥ १ ॥
३ २ ३ २ ३ १ २ ३ १ २ ३ २
अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत् ।
२उ ३ २ ३ २ ३ २ १ २र ३ १ २ ३
येनेन्द्रः शुष्ममिद्दधे ॥ २ ॥ ये त्वामिन्द्र न तुष्टु-
१ २र ३ १ २ ३ २ १ २र ३ १ २
वुर्ऋषयो ये च तुष्टुवुः । ममेद्वर्द्धस्व सुष्टुतः ॥
३ ॥ [५]

इति सामवेदे उत्तराग्रन्थस्य चतुर्दशाध्या-
यस्य प्रथमः खण्डः ॥ १ ॥

२ ३ १ २ ३ २ ३ २ ३ १ २ १
अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत । ये
२ ३ २उ ३ २ ३ १ २ ३ १ २ १
देवत्रा य आयुषु तेभिर्नो महया गिरः ॥ १ ॥ प्र-
२र ३ १ २ ३ १ २र ३ १ २ १ २
स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः । तनये
३ २ ३ २उ ३ २उ ३ १ २ १ २
तोके अस्मदा सम्यक् वाजैः परीवृतः ॥ २ ॥ त्वं नो
३ २ ३ १ २ ३ १ २ १ २ ३ १
अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्द्धय । त्वं नो देव-
२ ३ १ २र १ २
तातये रायो दानाय चोदय ॥ ६ ॥ [६] त्वे सोम
३ १ ३ १ २ ३ १ २र ३ १ २ ३ १ २
प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं द-
१ २र ३क २र ३क
धुः । स त्वं नो वीर वीर्य्याय चोदय ॥ १ ॥ अ-

२र ३ १ २र ३२ ३ २ ३ १ २र ३ २
अभि हि अवसा ततर्दिथोत्सं न कं चिज्जनपा-
३ १ २ १ २ ३ १ २र ३ १ २
नमक्षितम् । शर्य्याभिर्न भरमाणो गभस्त्योः ॥ २ ॥
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
अजीजनो अमृत मर्त्याय कमृतस्य धर्मन्नमृतस्य
१ २ १ २ ३ २ ३ २ ३ १ २
चारुणः । सदासरो वाजमच्छा सनिष्यदत् ॥ ३ ॥
२ ३ १ २ ३ १ २ ३ १ २र
[७] एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
१ २र ३ २ २ ३
प्र राधांसि चोदयते महित्वना ॥ १ ॥ उपो ह-
२ ३ २ ३ १ २ ३ १ २ ३ १ २
रीणां पतिं राधः पृञ्चन्तमब्रवम् । नूनं श्रुधि
३ २ ३ १ २ १ २ १ ३ २ ३ २
स्तुवतो अश्व्यस्य ॥ २ ॥ न ह्यां३ङ्ग पुरा च न
३ २ ३ १ २ ३ २ १ २ ३ २उ ३ २ ३
जज्ञे वीरतरस्त्वत् । न की राया नैवथा न भ-
१ २ ३ २ ३ १ २ ३ १ २र
न्दना ॥ ३ ॥ [८] नदं व ओदतीनां नदं योयुव-
१ २ ३ १ २ ३ १ २
तीनाम् । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥
१ ॥ [९]

इति सामवेदे उत्तराग्रन्थस्य चतुर्द-
शाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

३ १ २ ३ २ ३ १ २ ३ १ २ १ २
देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् । उद्वा

३ २ ३ १ २ ३ १ २र ३ १ २
सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १ ॥
१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृ-
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
ण्वत। दधाति रत्नं विधते सुवीर्य्यमग्निर्जनाय
३ १ २ १ २ ३ १ २ ३ १ २
दाशुषे ॥ २ ॥ [१०] अदर्शि गातुवित्तमो यस्मिन्
३ १ २ ३ २ २ ३ २ ३ १ २र ३ १ २ ३ १
व्रतान्यादधुः । उपो षु जातमार्य्यस्य वर्द्धनमग्निं
२ ३ १ २ २ ३ १ २ ३ १ २ ३ १
नक्षन्तु नो गिरः ॥ १ ॥ यस्माद्रेजन्त कृष्टयश्चर्कृ-
२ ३ २ ३ २ ३ १ २ ३ २ ३
त्यानि कृण्वतः । सहस्रसां मेधसाताविव त्मना-
२ ३ १ २ १ २र ३ १
ग्निं धीभिर्नमस्यत ॥ २ ॥ प्र दैवोदासो अग्निः
३ १ २
००० ॥ ३ ॥ [११] अग्न आयूंषि पवसे ॥ १ ॥
३ २उ ३ १ २ ३ १ २ ३ १ २ १
अग्निर्ऋषि पवमानः पाञ्चजन्यः पुरोहितः । त-
२ ३ २ २ ३ १ २ ३ १ २ ३
मीमहे महागयम् ॥ २ ॥ अग्ने पवस्व स्वपा अ-
१ २र ३ १ २ १ २ ३ २उ ३ १ २
स्मे वर्चः सुवीर्य्यम् । दधद्रयिं मयि पोषम् ॥ ३ ॥
१ २ ३ १ २ ३ १ २ ३ १
[१२] अग्ने पावक रोचिषा मन्द्रया देव जिह्व-
२ २ ३ १ २ ३ १ २ १ २
या । आ देवान् वक्षि यक्षि च ॥ १ ॥ तं त्वा

३ १ २ ३ १ २ ३ २उ
घृतस्नवीमहे चित्रभानो स्वर्दृशम् । देवाँ आ
३ १ २ ३ १ २ ३ २ ३
वीतये वह ॥ १ ॥ वीतिहोत्रं त्वा कवे द्युमन्तं
१ २ १ २ ३ १ २ ३ २
समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ४ ॥ [१३]

इति सामवेदे उत्तराग्रन्थस्य चतुर्दशाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

१ २ ३ १ २ ३ २ ३ १ २
अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।
१ २ ३ १ २ १ २ ३ १
विश्वासु धीषु वन्द्य ॥ १ ॥ आ नो अग्ने रयिं
२ ३ २ ३ १ २ १ २ ३ २ ३ १ २
भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥
१ २ ३ १ २ ३ २ ३ १ २
२ ॥ आ नो अग्ने सुचेतुना रयिं विश्वायुपोष-
३ १ २ ३ १ २ १ १
सम् । मार्डीकं धेहि जीवसे ॥ ३ ॥ [१४] अग्निं
२ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन
३ १ २ २ ३ २ ३ १ २ ३ १
जेष्म धनं धनम् ॥ १ ॥ यया गा आकरामहे से-
२ ३ २ ३ २ १ २ ३ १ २
नयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥ २ ॥
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् ।
३ २उ ३ १ २ ३ २ २ ३ १ २ ३
अङ्धि खं वर्त्तया पविम् ॥ ३ ॥ अग्ने नक्षत्रम-

२ ३ १ २र ३ २ २ ३ २ ३ १ २
जरमा सूर्य्यंर रोहयो दिवि । दधज्योतिर्जनेभ्यः
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३
॥ ४ ॥ अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थ-
२ १ २ ३ २उ ३ १ २ ३
सत् । बोधा स्तोत्रे वयो दधत् ॥ ५ ॥ [१५] अ-
२ ३ २ ३ २ ३ १ २र ३ २ ३ २ ३
ग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अ-
१ २र १ २ ३ १ २ ३ २
पाꣳरेताꣳसि जिन्वति ॥ १ ॥ ईशिषे वार्यस्य हि
३ १ २ ३क २र ३ २ ३ २ ३ १ २
दात्रस्याग्ने स्वःपतिः । स्तोता स्यां तव शर्मणि
१ २ ३ १ २ ३ १ २ ३ १ २र
॥ २ ॥ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
२ ३ १ २ ३ १ २
तव ज्योतींष्यर्चयः ॥ ३ ॥ [१६]

इति सप्तमप्रपाठकस्य प्रथमार्द्धम् ।

इति सामवेदे उत्तराग्रन्थस्य चतुर्दशाध्यायस्य चतुर्थ खण्ड ॥ ४ ॥

अथ पञ्चदशोऽध्याय आरभ्यते ।

अथ सप्तमप्रपाठकस्य द्वितीयार्द्धम् ।

१ २ ३ १ २र ३ २ ३ २ ३क २र ३ २ १
कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह क-
२ ३ २ २ ३ १ २र ३ १ २ ३
स्मिन्नसि श्रितः । १ ॥ त्वं जामिर्जनानामग्ने मि-
१ २ ३ २ २ ३ १ २ ३ १ २ १ २
त्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥ २ ॥ यजा

३१ २र१ १२ ३२ ३२३२ २३ २
नो मित्रावरुणा यजा देवाऽ ऋतं बृहत् । अग्ने य-
३ १ २र ३१ २ ३क२र३१
क्षि स्वं दमम् ॥ ३ ॥ [१] ईडेन्यो नमस्यस्तिरस्त-
२र १२ २३१ २ ३ १२
माᳬसि दर्शतः । समग्निरिध्यते वृषा ॥ १ ॥
१२ ३१ २र३२ ३ १ २३१२ २
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तᳬ-
३१ २ १२ ३१ २३ १
हविष्मन्त ईडते ॥ २ ॥ वृषणं त्वा वयं वृषन् वृ-
२३ १ २ २३ १२ ३२
षणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ ३ ॥ [२]
१२ ३१२ ३१२ ३१ २ १
उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः । अ-
२ ३१ २ १२ ३२ १२ ३
ग्ने शुक्रास ईरते ॥ १ ॥ उप त्वा जुह्वो३ मम घृ-
१ २ १२ ३१ २
ताचीर्यन्तु हर्य्यत । अग्ने हव्या जुषस्व नः ॥ २ ॥
३१ २र ३ १२ ३१२ ३१ २ ३
मन्द्रᳬहोतारमृत्विजं चित्रभानुं विभावसुम् । अ-
१ २ ३ १ २ ३ १ २ ३
ग्निमीडे स उ श्रवत् ॥ ३ । [३] पाहि नो अग्न
१२ ३१ २ ३१२ १२ ३ २ ३१
एकया पाह्यू३त द्वितीयया । पाहि गीर्भिस्तिसृ-
२ ३१ २३१२ ३१
भिरूर्जां पते पाहि चतसृभिर्वसो ॥ १ ॥ पाहि वि-
२र ३२३ १२१ २ ३ १२
श्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।

१ २र ३ १ २ ३ १ २र
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे
३ २
वृधे ॥ २ ॥ [ ४ ]

इति सामवेदे उत्तराग्रन्थस्य
पञ्चदशाध्यायस्य प्रथमः खण्डः ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ
३ ३ १ २र ३ १ २ ३ १ २ १
अदर्शि । चिकिद्धि भाति भासा वृहता सिक्नीमेति
१ २ ३ १ २ ३ १ २र ३ १ २र
रुशतीमपाजन् ॥ १ ॥ कृष्णां यदेनीमभि वर्प
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३
साभू ज्जनयन्योषां वृहतः पितुर्जाम् । ऊर्ध्वं भा-
१ २र ३ २ ३ १ २र ३ १ २र
नूं सूर्य्यस्य स्तभायं दिवो वसुभिररतिर्वि भाति
३ २ ३ २ ३ १ २ ३ २ ३ १ २
॥ २ ॥ भद्रो भद्रया सचमान आगात् स्वसारं
३ २ ३क २र ३ २ ३ १ २र ३ २ ३
जारो अभ्येति पश्चात् । सुप्रकेतैर्द्युभिराग्निर्वि-
२ ३ १ २ ३ १ २ ३ २ ३ १ २
तिष्ठ न्रुशद्भिर्वर्णैरभि राममस्थात् ॥ ३ ॥ [५]
१ २ ३ १ २ ३ १ २
काया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् ।
१ २ ३ १ २ १ २ ३ २ ३ १ २ ३
वराय देव मन्यवे ॥ १ ॥ दाशेम कस्य मनसा य-
१ २ १ २ ३ १ २र
ज्ञस्य सहसो यहो । कदु वोच इदं नमः ॥ २ ॥

१ २ ३१ ३ २ ३ १ २ ३ १ २ ३ २
अधा त्वꣳहि नस्करो विश्वा अस्मभ्यꣳ सुक्षितिः ।
१ २ ३ १२ २३ १ २ ३
वाजद्रविणसो गिरः ॥ ३ ॥ [६] अग्न आ याह्य-
३ ३१ २ १ २१ ३ १
ग्निभिर्होतारं त्वा वृणीमहे । आ त्वामनक्तु प्र-
१ २ ३१ २ ३ १ २ ३ २ ३१ २ २
यता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥ अ-
३ १ २ ३ २ ३ १ २
च्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्य-
३ २ ३ १ २१ ३ १ २ ३ २ ३ १ २
ध्वरे । ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु
३ २ १ २ ३ ३ १ २ ३ १ २
पूर्व्यम् ॥ २ ॥ [७] अच्छा नः शीरशोचिषं गिरो
३ २ १ २ ३ २ ३ १ २ ३ १ २
यन्तु दर्शतम् । अच्छा यज्ञासो नमसा पुरूवसुं
३ २ ३ १ २ ३ २ ३१ ३२
पुरुप्रशस्तमूतये ॥ १ ॥ अग्निꣳ सूनुꣳ सहसो
३ १ २ ३ २ ३ १ २ ३ २उ ३
जातवेदसं दानाय वार्य्याणाम् । द्विता यो भूद-
२ ३ २ ३ १ ३२ ३ १ २ २
मृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ २ ॥ [८]

इति सामवेदे उत्तराग्रन्थस्य

पञ्चदशाध्यायस्य द्वितीयः खण्डः ।

१ २ ३ २ ३ २ ३ १ २र २ ३
अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् । तूर्णी
२ ३ २ ३ १ २ ३ १ २र ३ १ २
रथः सदा नवः ॥ १ ॥ अभि प्रयाꣳसि वाहसा

दाश्वा९ अश्नोति मर्त्यः । क्षयं पावकशोचिषः
॥ २ ॥ साह्वान् विश्वा अभियुजः क्रतुर्देवाना-
ममृक्तः । अग्निस्तुविश्रवस्तमः ॥ ३ ॥ [९] भद्रो
नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्व-
रः । भद्रा उत प्रशस्तयः ॥ १ ॥ भद्रं मनः कृ-
णुष्व वृत्रतूर्ये येना समत्सु सासहिः । अव
स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये
॥ २ ॥ [१०] अग्ने वाजस्य गोमत ईशानः सहसो
यहो । अस्मे देहि जातवेदो महि श्रवः ॥ १ ॥ स
इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं
पुर्वणीक दीदिहि ॥ २ ॥ क्षपो राजन्नुत त्मनाग्ने
वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति
॥ ३ ॥ [११]

इति सामवेदे उत्तराग्रन्थस्य
पञ्चदशाध्यायस्य तृतीयः खण्डः ।

३१ २ ३ १ २ ३१२ र २
विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
३ २ ३ २ ३ १२ ३ २ ३२ ३ १ २
अग्निं वो दुर्य्यं वच स्तुषे शूषस्य मन्मभिः॥१॥
१ २र ३ १ २ ३२उ ३ १ २
यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्।
३१ २ ३ १२ १ २ ३ १
प्रशंसन्ति प्रशस्तिभिः ॥ २ ॥ पन्यांसं जात-
२ ३ २ ३२३ १ २ ३ १ २र ३ २
वेदसं यो देवतात्युद्यता । हव्यान्यैरयद्दिवि
१ २ ३ २ ३ १ २ ३१ २३
॥ ३ ॥ [१२] समिद्धमग्निं समिधा गिरो गृणे
१ २ ३२ ३१ २३२ ३२ २३ १
शुचिं पावकं पुरो अध्वरे ध्रुवम्। विप्रं हो-
२ ३१२३१२ ३२ ३१२ ३ १२
तारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम्
२ ३१२ ३१२ ३१२ ३१२
॥ १ ॥ त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं द-
३१ २र ३१२३ १२ ३ १ २
धिरे पायुमीड्यम्। देवासश्च मर्त्तासश्च जागृविं
३२ ३ २३ १२३ १ २ ३१२
विभुं विश्पतिं नमसा नि षेदिरे ॥ २ ॥ विभूष-
३२३ १२ ३२ ३२ ३२३ १२३
न्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी
१ २ १२ ३ १ २३१२ ३१ २र
समीयसे। यत्ते धीतिं सुमतिमावृणीमहे ऽध-
३१२ ३१ २ १२
स्मा नस्त्रिवरूथः शिवो भव ॥ ३ ॥ [१३] उप

३ २ ३ २ ३ १ २ ३ १ २ ३ १
त्वां जामयो गिरो देदिशतीर्हविष्कृतः। वायो
२र १ २ ३ १ २र ३ २
रनीके अस्थिरन् ॥ १ ॥ यस्य त्रिधात्ववृतं वर्हि-
३ १ २र १ २ ३ १ २ ३ २
स्तस्थावसन्दिनम्। आपश्चिन्नि दधा पदम् ॥२॥
१ २ ३ १ २ ३ १ २र ३ १ २ ३ १
पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः। भद्रा
२र ३ २
सूर्य्य इवोपदृक् ॥ ३ ॥ [१४]

इति सप्तमप्रपाठकस्य द्वितीयार्द्धम्।

इति सामवेदे उत्तराग्रन्थस्य पञ्चदशाध्यायस्य चतुर्थः खण्डः।

अथ षोडशोऽध्यायआरभ्यते।

सप्तमप्रपाठकस्य तृतीयार्द्धम्।

३ १ २ ३१२ ३ २ ३ १ २ ३ १ २ ३
अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः। समी-
१ २ ३ २ ३ १ २ ३ १ २ ३ २
चीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम्
३ १ २र ३ २ ३ २ ३ १ २ ३
॥ १ ॥ अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सु-
२ ३ १ २ ३ १ २र ३ १ २ ३ १
तस्य विष्णवि। अद्या तमस्य महिमानमाय-
२र ३ १ २ १ २
वोऽनु ष्टुवन्ति पूर्वथा ॥ २ ॥ [ १ ] प्र वामर्च-
३ १ २ ३ १ २ ३ १ २ १ २ ३
न्त्युक्थिनो नीथाविदो जरितारः। इन्द्राग्नी

इष आ वृणे ॥ १ ॥ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥ २ ॥ इन्द्राग्नी अपसस्पर्य्युप प्र यन्ति धीतयः । ऋतस्य पथ्या३ अनु ॥ ३ ॥ इन्द्राग्नी तविषाणि वाᳪ सधस्थानि प्रयाᳪसि च युवोरप्तूर्यᳪ हितम् ॥ ४ ॥ [ २ ] शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः । भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥ पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर ॥ २ ॥ [३] त्वᳪ ह्येहि चेरवे विदा भगं वसुत्तये । उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ १ ॥ त्वं पुरू सहस्राणि शतानि च यूथा दानाय मᳪहसे । आ पुरन्दरं चकृम विप्र वचस इन्द्रं गायन्तोऽवसे ॥२॥

२उ ३ १२३ २३ १२ ३१ २र
[४] यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
२३१ २र ३१ २३१ २र ३
मघोर्न पात्रा प्रथमन् यस्मै प्र स्तोमा यन्त्व-
१२ २३ २ ३२ ३क २र ३१२
ग्नये ॥ १ ॥ अश्वं न गीर्भी रथ्यं सुदानवो
३ १२ ३१२ ३२ ३१ २र
मर्मृज्यन्ते देवयवः । उभे तोके तनये दस्म वि-
३ २३ १२ ३१ २
श्पते पर्षि राधो मघोनाम् ॥ २ ॥ [५]

इति सामवेदे उत्तराग्रन्थस्य

षोड़शाध्यायस्य प्रथमः खण्डः ॥ १ ॥

३१ २ ३ १२३१ २ १२
इमं मे वरुण श्रुधी हवमद्या च मृड़य । त्वाम-
३ १ २र २३ १ २ ३१
वस्युरा चक्रे ॥ १ ॥ [६] कया त्वं न ऊत्याभि
२र १२ ३ २ ३ १ २
प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भर ॥ १ ॥
२३ २३१२ ३ १२ ३क २र ३२ १२
[७] इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे । इन्द्रं
३ २ ३ १ २ ३ २ ३ १२३ ३ २
समीके वनिनो हवामह इन्द्रं धनस्य सातये
१२ ३१ २र ३ २ ३ ३
॥ १ ॥ इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः
१ २ १ २ ३ २ ३ १ २ ३
सूर्य्यमरोचयत् । इन्द्रे ह विश्वा भुवनानि येमिर
१ २ ३ २ ३ १ २ १ २ ३
इन्द्रे स्वानास इन्दवः ॥ २ ॥ [८] विश्वकर्मन् ह-

१ २ ३ २ ३ १ २ ३ २ १
विपा वावृधानः स्वयं यजस्व तन्वा५ स्वा हि
२र १ २ ३ २ ३ २३ १२ ३१ २र ३१
ते । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघ-
२ ३ १ २ ३ २ ३ १ २र
वा सूरिरस्तु ॥ १ ॥ [९] अया रुचा हरिण्या
३ २उ ३ १ २ ३ १ २ ३ २ ३
पुनानो विश्वा द्वेषांसि तरति सयुग्वभिः सूरो
२ ३ १ २ १ २ ३ २ ३ १ २
न सयुग्वभिः । धारा पृष्ठस्य रोचते पुनानो अ-
३ १ २र २ ३ २ ३ १ २ ३ १ २र ३ १
रुषो हरिः । विश्वा यद्रूपा परियास्यृक्वभिः सप्ता-
२ ३ १ २ २ ३ १ २ ३ १ २ ३
स्येभिरृक्वभिः ॥ १ ॥ प्राचीमनु प्रदिशं याति
१ २ ३ २ ३ १ २ ३ २उ ३ १ २
चेकितत्स५ रश्मिभिर्यतते दर्शतो रथो दैव्यो द-
३ १ २र १ २ ३ २ ३ २उ ३ १ २
र्शतो रथः । अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय
१ २ ३ १ २र ३ १ २ ३ १
हर्षयन् । वज्रश्च यद्भवथो अनपच्युता समत्स्व-
२र २ ३ १ २ ३ १ २ ३ २ ३
नपच्युता ॥ २ ॥ त्व५ ह त्यत्पणीनां विदो वसु
२ ३ १ २ ३ १ २र ३ १ २ ३ २
सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीति-
३ १ २ ३ २ ३ २क ३ २उ ३ १ २ ३ १
भिर्दमे । परावतो न साम तद्यत्रा रणन्ति धीत-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १
यः । त्रिधातुभिररुषीभिर्वयो दधे रोचमानो व-

२ ३१ २ ३ २ ३ १ २ ३
यो दधे ॥ ३ ॥ १० ॥ उत नो गोषणिं धियमश्व-
१ २ ३ २ ३ २ ३ १ २ ३ १ २
सां वाजसामुत । नृवत्कृणुह्यूतये ॥ १ ॥ [११]
३ १ २ ३ १ २ ३ १
शशमानस्य वो नरः स्वेदस्य सत्यशवसः । विदा
२२ ३ १ २ १ २ ३ २ ३ १ २
कामस्य वेनतः ॥ १ ॥ [१२] उप नः सूनवो गिरः
३ २ ३ १ २ ३ २ ३ १ २
शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः ॥१॥ [१३]
२ ३ २ ३ १ २ ३ १ २ २ ७
प्र वो महि द्यवी अभ्युपस्तुतिं भरामहे । शुची
२ ३ १ २ ३ २ ३क २२ ३ २उ ३
उप प्रशस्तये ॥ १ ॥ पुनाने तन्वा मिथः स्वेन
१ २ ३ १ २ ३ २ ३ २ ३ २
दक्षेण राजथः । ऊह्याथे सनादृतम् ॥ २ ॥ मही
३ १ २ ३ १ २ ३ १ २ ३ २ १ २
मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् । परि
३ १ २र ३ १ २ ३ १ २
यज्ञं नि षेदथुः ॥ ३ ॥ [१४] अयमु ते समतसि
३ १ २ ३ २ २ ३ १ २
कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ १ ॥
३ १ २ ३ १ २ ३ १ २
स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते ।
१ २ ३ १ २ ३ १ २ ३ २
विभूतिरस्तु सूनृता ॥ २ ॥ ऊर्ध्वस्तिष्ठा न ऊत-
३ १ २र २ ३ १ २
येऽस्मिन् वाजे शतक्रतो । समन्येषु ब्रवावहै ॥

२ ३ १ २ ३२ ३२ ३१ २ ३ १
३ ॥ [१५] गाव उप वदावटे मही यज्ञस्य रप्सु-
२ ३१ २र ३ १ २ २ २ ३ १
दा। उभा कर्णा हिरण्यया ॥ १ ॥ अभ्यारमिद्-
२र१ १ २३ १ २३ १ २ ३ १ २ ३१२
द्रयो निषिक्तं पुष्करे मधु। अवटस्य विसर्जने
३ २ ३ १ २ ३२३१ २३ १ २
॥ २ ॥ सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मा-
३ १ २ ३१ २
नम्। नीचीनवारमक्षितम् ॥ ३ ॥ [१६]

इति सामवेदे उत्तराग्रन्थस्य षोड़शा-
ध्यायस्य तृतीयः खण्डः ॥ ३ ॥

१ २३ १ २ ३ १ २ ३१ २र ३२३
मा भेम मा श्रमिष्मोग्रस्य सख्ये तव। महत्ते
१ २ ३१ २ ३१ २र ३२३ १ २
वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ १ ॥
३ १ २र ३क २र ३ २३ २ ३ १ २
सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य
२ ३ १ २ ३ ३१२ ३२३ २ ३
रोषति। मध्वा सम्पृक्ताः सारघेण धेनवस्तूय-
२ ३ २ ३ १ २ ३१ २
मेहि द्रवा पिब ॥ २ ॥ [१७] इमा उ त्वा पुरू-
३ १ २ ३ १ २र ३ १ २३ १ २
वसो गिरो वर्द्धन्तु या मम। पावकवर्णाः शुचयो
३ २ ३ १ २र ३२ ३२
विप श्चितोऽभि स्तोमैरनूषत ॥ १ ॥ अयं सह-
३ १ २ ३ १ २ २ ३१ २ ३ १
स्रमृषिभिः सह स्कृतः समुद्र इव पप्रथे। सत्यः

२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये
२ ३ २उ ३ २ ३ १ २
॥ २ ॥ [१८] यस्यायं विश्व आर्य्यो दासः शेव-
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ १
धिपा अरिः। तिरश्चिदर्य्ये रुशमे पवी रवि तुभ्ये-
२र ३ १ ३ २ ३ १ २
त्सो अज्यते रयिः ॥ १ ॥ तुरण्यवो मधुमन्तं
३ २ ३ १ २ ३ १ २ ३ २ ३ १
घृत श्रुतं विप्रासो अर्कमानृचुः। अस्मे रयिः
२ ३ २ ३ २ ३ २ ३ २ ३ १ २
पप्रथे वृष्ण्यᳯ शवोऽस्मे स्वानास इन्दवः ॥ २ ॥
१ २ ३ १ २ १ ३ १ २
[१९] गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव।
१ २ ३ २ ३ २ ३ १ २ १ २
शुचिं च वर्णमधि गोषु धारय ॥ १ ॥ स नो ह-
३ १ २ ३ १ २ १ २ ३ १ ३ १ २
रीणां पत इन्दो देवप्सरस्तमः। सखेव सख्ये नर्य्यो
३ १ २ १ २ ३ २ ३ १ २र १ २ ३ १
रुचे भव ॥ २ ॥ सनेमि त्वमस्मदा अदेवं कं चिदत्रि-
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
णम्। साह्वाᳯ इन्दो परि बाधो अप द्वयुम् ॥३॥
३ २ ३क २र ३ १ २ ३ १ २ ३
[२०] अञ्जते व्यञ्जते समञ्जते क्रतुᳯ रिहन्ति
२ ३क २र १ २ ३ २ ३ १ २ ३ १ २
मध्वाभ्यञ्जते। सिन्धोरुच्छ्वासे पतयन्तमुक्षणᳯ
३ २ ३ २ ३ १ २ ३ २ ३
हिरण्यपावाः पशुमप्सु गृभ्णते ॥ १ ॥ विपश्चिते

१ २ २ १ २र
पवमानाय गायत महीं न धारात्यन्धो अर्षति ।
२ ३ २ ३ १ २र ३ २ ३ २ ३ १ ३र
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीड़न्न-
३ २ ३ १ २ ३ १ २र
सरद्वृषा हरिः ॥ २ ॥ अग्रेगो राजाप्यस्तविष्यते
३ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ १
विमानो अह्नां भुवनेष्वर्पित. । हरिर्घृतस्नुः सुदृ-
२ ३ २ ३ १ २ ३ २ ३क २र
शीको अर्णवो ज्योतीरथः पवते राय ओक्यः
॥ ३ ॥ [२१]

इति सप्तमप्रपाठकस्य तृतीयोर्द्धम् ।

इति सप्तमप्रपाठक. ।

इति सामवेदे उत्तराग्रन्थस्य

चतुर्थः खण्ड ॥ ४ ॥

अथ अष्टम प्रपाठकः ।

अथ सप्तदशोऽध्याय आरभ्यते ।

अष्टमप्रपाठकस्य प्रथमार्द्धम् ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २र
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
१ २ २ ३ १ २र ३
चनो धाः सहसो यहो ॥ १ ॥ यच्चिद्धि शश्वता
१ २ ३ १ २ ३ १ २ १ २र ३ २
तना देवदेवं यजामहे । त्वे इद्धूयते हवि· ॥ २ ॥
३ १ २ ३ २ ३ १ २ ३ १ २र
प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्य ।

प्रियाः स्वग्नयो वयम् ॥ ३ ॥ [१] इन्द्रं वो वि-
श्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केव-
लः ॥ १ ॥ स नो वृषन्नमुं चरुꣳ सत्राादावन्नपा
वृधि । अस्मभ्यमप्रतिष्कुतः ॥ २ ॥ वृषा यूथेव
वꣳसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कु-
तः ॥ ३ ॥ [२] त्वं नश्चित्र ऊत्या वसो राधाꣳसि
चोदय । अस्य रायस्त्वमग्ने रथीरसि विदा गाधं
तुचे तु नः ॥ १ ॥ पर्षि तोकं तनयं पर्तृभिष्ट्वम-
दब्धैरप्रयुत्वभिः । अग्ने हेडाꣳसि दैव्या युयोधि
नोऽदेवानि ह्वराꣳसि च ॥ २ ॥ [३] किमित्ते वि-
ष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अ-
स्मि । मावर्पो अस्मदप गूह एतद्यदन्यरूपः सं-
मिथे बभूथ ॥ १ ॥ प्र तत्ते अद्य शिपिविष्ट ह-
व्यमर्यः शꣳसामि वयुनानि विद्वान् । तं त्वा-

३२३१२३ १२ ३१ २र ३
गृणामि तवसमतव्यान्क्षयन्तमस्य रजस परा-
२ १२ ३१ २र ३१२
के ॥ २ ॥ वषट्ते विष्णवास आ कृणोमि तन्मे
३२ १२ ३२३
जुषस्व शिपिविष्ट हव्यम् । वर्द्धन्तु त्वा सुष्टुतयो
१२ ३१२ ३२३१२
गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥ [४]
१२ ३१ २ ३ २३ २३ १२
वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
१ २ ३१२ ३१ २ ३१२
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥
१२ ३ १२ ३१२
१ ॥ इन्द्रश्च वायवेषां सोमानां पीतिमर्हथ ।
३१ २र ३२उ ३ २३क२र
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥
२३१२ ३१२ ३१२ ३
वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती । नि-
१ ३२३ १ २३ १२
युत्वन्ता न ऊतय आ यातं सोमपीतये ॥३॥[५]
१२ ३१ २र ३१२ ३१ २र
अध क्षपा परिष्कृतो वाजां अभि प्र गाहसे ।
१२ ३१२३ २३ ३२ ३२ ३१२
यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे ॥
१२ ३२३१२३१२ १
१ ॥ तमस्य मर्जयामसि मदो य इन्द्रपातमः । यं
२र ३१२३२ ३२ ३१ २ ३२
गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ २ ॥

१ २र ३ १ २ ३ २ ३क २र ३ १ २
तं गाथया पुराण्या पुनानमभ्यनूषत । उतो कृ-
३ १ २ ३ २ ३ २ ३ १ २
पन्त धीतयो देवानां नाम बिभ्रती ॥ ३ ॥ [६]
२ ३ २ ३ १ २ ३ १ २ ३ १ २र
अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
३ १ २ ३ १ २ १ २ ३ १
सम्राजन्तमध्वराणाम् ॥ १ ॥ स घा नः सूनुः
२र ३ १ २ ३ १ २ ३ २ ३ १ २
शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं
१ २ ३ २ ३ २ ३ १ २र
बभूयात् ॥ २ ॥ स नो दूराच्चासाच्च नि मर्त्याद-
३ २ ३ २उ ३ २ ३ १ २ १ २
घायोः । पाहि सदमिद्विश्वायुः ॥ ३ ॥ [७] त्वमि-
३ १२ ३ १ २र ३ १ २ ३
न्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृधः । अशस्ति-
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
हा जनिता वृत्रतूरसि त्वं तूर्य्य तरुष्यतः ॥ १ ॥
१ २ ३ १ २ ३ १ २ ३ २उ ३ २
अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न
३ १ २ १ २ ३ १ २ ३ १ २ ३ १
मातरा । विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं
२र ३ १ २
यदिन्द्र तूर्वसि ॥ २ ॥ [७]

इति सामवेदे उत्तराग्रन्थस्य सप्तदशा-
ध्यायस्य द्वितीयः खण्ड. ॥ २ ॥

३ १ २र ३ २उ ३ १ २ ३ १
यत्र इन्द्रमवर्द्धयद्यद्भूमिं व्यवर्त्तयत् । चक्राण

२ ३ २ ३ २ २ १ २ ३ २ ३ १
ओपशं दिवि ॥ १ ॥ व्याऽन्तरिक्षमतिरन्मदे सो-
२ ३ २ २ ३ १ २र ३ २ १
मस्य रोचना । इन्द्रो यदभिनद्वलम् ॥ २ ॥ उद्गा
२र ३ १ २ ३ २ ३ १ २र ३ २ ३
आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अ-
१ २ ३ २ १ २ ३ २ ३
र्वाञ्चं नुनुदे वलम् ॥ ३ ॥ [९] त्यमु वः सत्रासाहं
१ २ ३ १ २ १ २ ३ १ २
विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥ १ ॥
३ १ २र ३ १ २ ३ १ २र
युष्मं सन्तमनर्वाणं सोमपामनपच्युतम् ।
१ २ ३ १ २ १ २ १ २उ
नरमवार्य्यक्रतुम् ॥ २ ॥ शिक्षा ण इन्द्र राय आ
३ २ ३ १ २ १ २ ३ ३ १ १ २
पुरु विद्वां ऋचीषम । अवा नः पार्य्ये धने
२ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १
॥ ३ ॥ [१०] तव त्यदिन्द्रियं बृहत्तव दक्षमुत
२र १ २ ३ २ ३ १ २
क्रतुम् । वज्रं शिशाति धिषणा वरेण्यम् ॥१॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तव द्यौरिन्द्र पौंस्यं पृथिवी वर्द्धति श्रवः ।
२उ ३ १ २ १ २र
त्वामापः पर्वतासश्च हिन्विरे ॥ २ ॥ त्वां विष्णु-
३ १ २र ३ १ २ ३ १ २ १ २र
र्बृहन् क्षयो मित्रो गृणाति वरुणः । त्वां शर्धो
३ २ ३ १ २
मदत्यनु मारुतम् ॥ ३ ॥ [११]

इति सामवेदे उत्तराग्रन्थस्य
सप्तदशाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

२ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमि-
२ ३ २र ३ १ २ ३ १ २ ३ १
त्रमर्दय ॥ १ ॥ कुवित्सु नो गविष्टयेऽग्ने संवे-
२ ३ २ १ २ ३ १ २ १ २
षिषो रयिम् । उरुकृदुरु णस्कृधि ॥ २ ॥ मा नो
२ १ २र ३ १ २ ३ २ ३
अग्ने महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ
२ ३ १ २ १ २ ३ २ ३ २ ३
सꣳ रयिं जय ॥ ३ ॥ [१२] समस्य मन्यवे विशो
१ २ ३ १ २ ३ १ २ ३ १ २
विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥१॥
१ २ २ ३ १ २ ३ १ २ ३ १ २
वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना ।
१ २ ० १ २ २ ३ १ २
वज्रेण शतपर्वणा ॥ २ ॥ ओजस्तदस्य तित्विष
३ २उ ३ १ २ २ ३ १ २ ३ १ २
उभे यत्समवर्त्तयत् । इन्द्रश्चर्मेव रोदसी ॥ ३ ॥
३ २ ३ २ ३ १ २ ३ १ २ १ २
[१३] सुमन्मा वस्वी रन्ती सूनरी ॥ १ ॥ सरूप
३ १ २ ३ २ ३ १ २३ ३ २ २ ३१ ३र
वृषन्ना गहीमौ भद्रौ धुर्यावभि । ताविमा उप
२र ३ १ २ ३ २ ३ १ २
सर्पतः ॥ २ ॥ नीव शीर्षाणि मृढ्वं मध्य आप-
१ २ ३ १ २ ३ २
स्य तिष्ठति । शृङ्गेभिर्दशभिर्दिशन् ॥ ३ ॥ [१४]

इति अष्टमप्रपाठकस्य प्रथमार्द्धम् ।

इति सामवेदे उत्तराग्रन्थस्य

चतुर्थः खण्डः ॥ ४ ॥

अथ अष्टादशोऽध्याय आरभ्यते ।

अष्टमप्रपाठकस्य द्वितीयार्द्धम् ।

१-२ ३ १ २ ३ १ २ ३ १ २ १ २
पन्यंपन्यमित्सोतार आ धावत मद्याय । सोमं
३ २ ३ १ २ १ २र ३ १ २ ३ १
वीराय शूराय ॥ १ ॥ एह हरी ब्रह्मयुजा शग्मा
२ ३ १ २ १ २ ३ १ २र
वक्षतः सखायम् । इन्द्रं गीर्भिर्गिर्वणसम् ॥ २ ॥
१ २ ३१ ३१ २र ३ २उ ३ २ १
पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नि
२ ३ २ २ १ २ ३ १
यमते शतमूतिः ॥ ३ ॥ [१] आ त्वा विशन्त्वि-
२ ३ १ २ ३ १ २ २उ ३ १ २
न्दव. समुद्रमिव सिन्धव. । न त्वामिन्द्राति
३ १ २ ३ १ २ ३१
रिच्यते ॥ १ ॥ विव्यक्थ महिना वृषन् भक्ष५
२र १ २ ३ १ २
सोमस्य जागृवे । य इन्द्र जठरेषु ते ॥ २ ॥
१ २ ३ २ ३ १ २
अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् ।
२ ३ १ २ १ २ १ २ ३ १ २
अरंधामभ्य इन्दः ॥ ३ ॥ [२] जराबोध तद्विविड्ढि
३ १ २ ३ १ २ १ २ ३ १ २ १ २
विशेविशे यज्ञियाय । स्तोम५ रुद्राय दृशीकम्

१ २ १ २ ३ २ ३ १ २ ३
॥ १ ॥ सं नो महाँ अनिमानो धूमकेतुः पुरुश्च-
२ ३१ २र २ ३१ २
न्द्रः । धिये वाजाय हिन्वतु ॥ २ ॥ स रेवाँ इव
३ २३१ २ ३१ २ ३ २ ३ २ ३
विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृ-
१ २ १ २ ३ १ २र ३
हद्भानुः ॥ ३ ॥ [३] तद्वो गाय सुते सचा पुरुहू-
२ ३ १ २ २उ ३ २ ३ १ २ २ ३
ताय सत्वने । शं यद्गवे न शाकिने ॥ १ ॥ न घा
२ ३ १ २ ३ १ २र ३ १ २ २ ३ २ ३
वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप-
२ ३ १ २ ३ १ २ ३ २उ ३ १ २र
श्रवद्गिरः ॥ २ ॥ कुवित्सस्य प्र हि व्रजं गोमन्तं
३ १ २र १ २ ३ १ २
दस्युहागमत् । शचीभिरप नो वरत् ॥ ३ ॥ [४]

इति सामवेदे उत्तराग्रन्थस्य अष्टादशाध्या-
यस्य प्रथमः खण्डः ॥ १ ॥

३ २उ ३ १ ३ ३ १ २र ३ २ १ २
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समू-
३ २ १ २ ३ १ २र ३
ळ्हमस्य पांसुले ॥ १ ॥ त्रीणि पदा वि चक्रमे वि-
२ ३ १ २र २ ३ १ २ ३ १ २
ष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥२॥
२ ३ १ २ ३ १ २ ३ १ २ ३ ३
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
१ २ ३ २ ३ १ २ १ २र ३ २ ३ १
इन्द्रस्य युज्यः सखा ॥ ३ ॥ तद्विष्णोः परमं पदं

२र　३ १ २　३२ ३ २ ३ १ २
सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥४॥
१ २र　३ १ २　३ २ ३ १ २　२
तद्विप्रासो विपन्युवो जागृवांᳪस. समिन्धते । वि-
३ १ २ ३ २ ३ २　१ २ ३१ २　३
ष्णोर्यत्परमं पदम् ॥ ५ ॥ अतो देवा अवन्तु नो
२ ३ १ २　३ २ ३ २उ ३ १ २
यतो विष्णुर्विचक्रमे । पृथिव्या अधि सानवि॥६॥
३　२र ३ १ २ ३ २उ ३ १　२र
[५] मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
३ १ २　३ १ २ ३ १ २ ३ २ ३ १ ३र
आरात्ताद्वा. सधमादं न आ गहीह वा सन्नुप श्रु-
३ १　२र ३ १ २ ३ २उ ३ २ ३
धि ॥ १ ॥ इमे हि ते ब्रह्मकृतः सुते सचा मधौ
२　३ १ २　२ ३　१ २　३ १ २　३ २ ३
न मक्ष आसते । इन्द्रे कामं जरितारो वसूयवो
२ ३ २　३१ २　१ २ ३ १ २
रथे न पादमा दधुः ॥ २ ॥ [६] अस्तावि मन्म
३ १　२र　३ २ ३ १ २　३ १ २
पूर्व्यं ब्रह्मेन्द्राय वोचत । पूर्वीर्ऋतस्य बृहतीर-
३ २ ३ १ २　२उ ३ १ २
नूषत स्तोतुर्मेधा असृक्षत ॥ १ ॥ समिन्द्रो रायो
३ १ २　३ २ ३ २उ ३ १ २　२ ३ २
बृहतीरधूनुत सं क्षोणी समु सूर्य्यम् । सᳪ शुक्रा-
३ १ २ ३ १　२र ३　२ ३ १ २
स. शुचयः स गवाशिरः सोमा इन्द्रममन्दिषुः ॥
१ २　३ १ २　३ २ २र
२ ॥ [७] इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्य-

१२ ३ १२ ३ १२ ३ १२
से । नरे च दक्षिणावते वीराय सदनासदे ॥ १ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १
तं सखायः पुरूरुचं वयं यूयं च सूरयः । अश्या-
३ १ २ ३ २ ३ १ २ २ ३
म वाजगन्ध्यं सनेभ वाजपस्त्यम् ॥ २ ॥ परि
१ २ ३ १ २र १ २र
त्यं हर्यतं हरिं० ॥ ३ ॥ [८] कस्तमिन्द्रत्वा
३ १ २र ३ १ २ ३ १ २
वसो मर्त्यो० ॥ १ ॥ मघोनः स्म वृत्रहत्येषु
३ १ २र ३ १ २र २ ३ १ २
चोदय ये ददति प्रिया वसु । तव प्रणीती हर्य्य-
३ २ ३ १ २ ३ २
श्व सूरि भिर्विश्वा तरम दुरिता ॥ २ ॥ [९]

इति सामवेदे उत्तराग्रन्थस्य
अष्टादशाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३
एदु मधोर्मदिन्तरं सिञ्चाध्वर्य्यो अन्धसः । ए-
२उ ३ १ २र ३ १ २ १ २
वा हि वीर स्तवते सदावृधः ॥ १ ॥ इन्द्र स्था-
३ १ २ ३ १ २ १ २ ३ १ २
तर्हरीणां न किष्टे पूर्व्यस्तुतिम् । उदानंश शव-
३ २ ३ १ २ २ ३ १ २ ३ २ ३ १ २
सा न भन्दना ॥ २ ॥ तं वो वाजानां पतिमहू-
३ १ २ १ २ ३ १ २ ३ १ २
महि श्रवस्यवः । अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥३॥
१ २ ३क २र ३ १ २ ३ १ २ ३ १ २
[१०] तं गूर्धया स्वर्णरं देवासो देवमरतिं दध-

३ २ ३ १ २ १ २
न्विरे। देवत्रा हव्यमूहिषे ॥ १ ॥ विभूतरातिं
३ १ २ ३ १ २ ३ १ २ ३ १
विप्र चित्र शोचिषमग्निमीडिष्व यन्तुरम्। अस्य
२र ३ १ २ ३ १ २ ३ १ २ ३ १
मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२॥
१ २. ३ १ २र ३ १ २र ३
[११] आ सोम स्वानो अद्रिभिस्तिरो वाराण्य-
१ २ २ ३ २ ३ २ ३क २र ३ २ ३ २ ३
व्यया। जनो न पुरि चम्वोर्विश हरिः सदो
१ २ १ २ ३ १ २र
वनेषु दध्रिषे ॥ १ ॥ स मामृजे तिरो अण्वानि
३क २र ३ २उ ३ १ २ ३ २ ३ २ ३ १ २
मेष्यो मीढ्वांत्सप्तिर्न वाजयुः। अनुमाद्यः पवमानो
३ २ ३ २ ३ १ २ ३ १ २
मनीषिभिः सोमो विप्रेभिर्ऋक्विभिः ॥२॥ [१२]
३ १ २ ३ १ २र ३ २ ३ १ ३ १ २
वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्। तस्मा उ
३ १ २र ३ २ ३ २ ३ १ २ ३ २
अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥१॥
१ २ ३ १ २ ३ २ ३ २ ३ १ २
वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति।
२उ ३ १ २ ३ २उ ३ २ ३ २ ३ १ २
सेमं न स्तोमं जुजुषाण आ गहिन्द्र प्र चित्रया
३ २ १ २ . ३ २ ३ २उ ३
धिया ॥ २ ॥ [ १ ] इन्द्राग्नी रोचना दिवः परि
१ २ १ २ ३ २ ३क २र १
वाजेषु भूषथः। तद्वां चेति प्र वीर्य्यम् ॥ १ ॥ इ-

२ ३ १२३ १२ १२ ३ १ २
न्द्राग्नी ग्रपसस्परि० ॥ २ ॥ इन्द्राग्नी तविषाणि
३ २ ३१ २र
वां० ॥ ३ ॥ [१४] क ईं वेद सुते सचा० ॥ १ ॥
२ २ ३१ २र३१ २३२ ३१२ १ २
दाना मृगो न वारणः पुरुत्रा चरथं दधे । न कि-
२ १ २३२ ३१ २ ३१ २३ १ २
ष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ २ ॥
२ ३ १ २र ३ १ २र३ १ २ १
य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः । य-
२ ३ २३१२ ३२३२३ १ २ ३ १ २
दि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत्
॥ ३ ॥ [१५]

इति सामवेदे उत्तराग्रन्थस्य अष्टाद-
शाध्यायस्य तृतीयः खण्डः ॥३॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २
पवमाना असृक्षत सोमाः शुक्रास इन्दवः । अभि
२र ३ १ २ २ २ ३ २उ ३ १ २
विश्वानि काव्या ॥ १ ॥ पवमाना दिवस्पर्य्यन्तरि-
१ २र ३ १ २ १ २
क्षादसृक्षत । पृथिव्या अधि सानवि ॥ २ ॥ पव-
३ १ २ ३१ २ ३ १ २ ३ ३ २
मानास आशवः शुभ्रा असृग्रमिन्दवः । घ्नन्तो वि-
३ २३१२ ३ १ २३१२
श्वा अप द्विषः ॥ ३ ॥ [१६] तोशा वृत्रहणा हुवे
३ २ ३ १ २ ३ १ २ ३ १ १
सजित्वानापराजिता । इन्द्राग्नी वाजसातमा ॥१॥

१ २ ३ १ २ १ २ ३ १ २र
प्र वामर्चन्त्युक्थिनः ॥ २ ॥ इन्द्राग्नी नवतिं पुरः
१ २ ३ १ २ ३ १ २
॥ ३ ॥ [१७] उप त्वा रणवसंदृशं प्रयस्वन्तः सह-
१ २ ३ २ ३ १ २ १ २ ३ १
स्कृत । अग्ने ससृज्महे गिरः ॥ १ ॥ उप छाया-
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
मिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसंदृ-
२ ३१ २ ३ २ ३ १ २ ३ १
शः ॥ २ ॥ य उग्र इव शर्य्यहा तिग्मशृङ्गो न वंस-
२र २ ३ १ २ ३ १ २ ३ १ २
गः । अग्ने पुरो रुरोजिथ ॥ ३ ॥ [१८] ऋतावानं
१ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १
वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्म-
२ ३१ २ ३ २ ३ २ ३क २र ३ २
मीमहे ॥ १ ॥ य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिर-
३ १ २र ३ २ ३ २ ३ २ ३ १
न् । ऋतूनुत्सृजते वशी ॥ २ ॥ अग्निः प्रियेषु धा-
२ ३ १ २ ३ २ ३ १ २ ३ २उ ३ १ २
मसु कामो भूतस्य भव्यस्य । सम्राडेको वि राज-
ति ॥ ३ ॥ [१९]

इति अष्टमप्रपाठकस्य द्वितीयार्द्धम् ।

इति सामवेदे उत्तराग्रस्य अष्टादशा-

ध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

अथैकोनविंशोऽध्यायः आरभ्यते ।

अष्टमप्रपाठकस्य तृतीयार्द्धम् ।

३ २ ३२ ३ १ २ ३ १ २ ३ २ २
अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वाᳬस्वाम् ।
३ १ ३२ ३ १ ३२ ३ १ २ ३
कविर्विप्रेण वावृधे ॥ १ ॥ ऊर्जो नपातमा हुवे-
१ २ ३ १ २ ३ २ ३ १ २ ३ २
ऽग्निं पावकशोचिषम् । अस्मिन् यज्ञे स्वध्वरे॥२॥
१ २ ३ १ २र ३ १ २ ३ १ २ ३ १
स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा
२र ३ २ ३ १ १ २ ३ १
सत्सि बर्हिषि ॥ ३ ॥ [१] उत्ते शुष्मासो अस्थू र-
२ ३ १ २ ३ २ ३ १ ३ ३ १ २
क्षो भिन्दन्तो अद्रिवः । नुदस्व याः परिस्पृधः॥१॥
३ १ २ ३ १ २र ३ १ २र ३ २ २ ३
अया निजघ्निरोजसा रथसङ्गे धने हिते । स्तवा
१ २ ३ २ १ २ ३ २ ३ २उ ३ १
अबिभ्युषा हृदा ॥ २ ॥ अस्य व्रतानि नाधृषे प-
२ ३क २र ३ १ २र ३ १ २ १
वमानस्य दूढ्या रुज यस्त्वा पृतन्यति ॥ ३ ॥ तᳬ
२ ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३
हिन्वति मदच्युतᳬ हरिं नदीषु वाजिनम् । इन्दु-
१ २ ३ २ २ ३ १ २ ३ १ २
मिन्द्राय मत्सरम् ॥ ४ ॥ [२] आ मन्द्रैरिन्द्र हरि-
३ २ ३ १ २ २ ३ २ ३ १ २ ३ २
भिर्याहि मयूररोमभिः । मा त्वा के चिन्नि येमुरिन्न
२ ३उ ३ १ २ ३ १ २ २ १
पाशिनोऽति धन्वेव ताᳬ इहि ॥ १ ॥ वृत्रखादो
२ ३ २ ३ २ ३ २ ३ २ ३ २ २ ३ १ २ ३
वलᳬरुजः पुरां दर्मो अपामजः । स्थाता रथस्य

१ २ ३१ २र ३ १ २ ३ २ ३
हर्य्यो रभिस्वर इन्द्रो दृढा चिदारुजः ॥ २ ॥ गम्भी-
१ २३१ २३ १२ ३ १ २ १ २ ३
रा२ उदधीरिव क्रतुं पुष्यसि गा इव । प्र सुगो-
१ २र ३१२ ३२ ३ १ २
पा यवसं धेनवो यथा ह्रदं कुल्या इवाशत॥३॥[३]
१२ ३ २ ३ २ ३ २३१ १ २र ३
यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् । आपि-
१ २ ३ २उ ३१ २३ १ २ ३ २उ २ १
त्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पि-
२ १२ ३ १ २ ३ १
ब ॥ १ ॥ मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदे-
२ ३२ ३ २ ३ १ २ ३ २ ३१उ ३
याय सुन्वते । आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं
१ २ ३ १२ ३ ३१ २र ३
तद्दधिषे सहः ॥ २ ॥ [४] त्वमङ्ग प्रशंसिषो दे-
१ २ ३ १ २ २उ ३ २ २
वः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति म-
३२३ १२ ३ १२ २ १ २ ३
र्डितेन्द्र ब्रवीमि ते वचः ॥ १ ॥ मा ते राधांसि
१ २ ३१२ ३ १ २र ३१ ३ १
मा त ऊतयो वसोऽस्मान् कदा चना दभन् । वि-
२ ३ १ २ ३ १२ ३ २ ३
श्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य
२
आ ॥ २ ॥ [५]

इति सामवेदे उत्तराग्रन्थस्यैकोनविं-
शाध्यायस्य प्रथमः खण्डः ॥ १ ॥

२ ३ २ ३२३ १२ ३ २ ३ २ ३ १ २ ३
प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः । दि-
१ २ ३२ १२ ३ १ २ ३
वो अदर्शि दुहिता ॥ १ ॥ अश्वेव चित्रारुषी मा-
१ २र ३ १ २ १ २ ३ १ २ ३ २
ता गवामृतावरी । सखा भूदश्विनोरुषाः ॥ २ ॥
३ १ २र ३ १ २ ३ २ ३ १ २र ३ २ ३
उत सखास्यश्विनोरुत माता गवामसि । उतोषो
१ २ ३२ ३ १ २र ३क २र
वस्व ईशिषे ॥ ३ ॥ [६] एषो उषा अपूर्व्या व्यु-
३ २ ३ २ ३ १ २ ३ २
च्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१॥
२ ३ १ २र ३ १ २ ३ २ ३
या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धि-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
या देवा वसुविदा ॥ २ ॥ वच्यन्ते वां ककुहासो
३ २ ३ १ २ ३ १ २ २ ३ २ ३ २ ३ १ २
जूर्णायामधि विष्टपि । यद्वाम् रथो विभिष्पतात्
२ ३ २ ३ १ २र ३ १ २
॥ ३ ॥ [७] उषस्तच्चित्रमा भरास्मभ्यं वाजिनीव-
१ २ ३ २ ३ १ २ ३ १ २ १ २
ति । येन तोकं च तनयं च धामहे ॥ १ ॥ उषो
३ १ २र ३ १ २ ३ २ ३ १ २
अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्यु-
३ १ २र ३ १
च्छ सूनृतावति ॥ २ ॥ युङ्क्ष्वा हि वाजिनीवत्य-
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
श्वाम् अद्यारुणाम् उषः । अथा नो विश्वा सौभ-

२ १ २ १ २ ३ २ ३ १
शास्या वह ॥ ३ ॥ [८] अश्विना वर्त्तिरस्मदा
२र ३ १ २ ३ २उ ३ १ २ ३
गोमद्दस्रा हिरण्यवत् । अर्वाग्रथᳫ समनसा
१ २ २उ ३ १ २ ३ १ २ ३ १
नि यच्छतम् ॥ १ ॥ एह देवा मयोभुवा दस्रा
२र ३ १ २ ३ १ २
हिरण्यवर्त्तनी । उपर्बुधो वहन्तु सोमपीतये ॥२॥
२ ३ २उ ३ २ ३ २उ ३ १ २ ३ १ २
यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
२ ३ १ २ ३ २
आ न ऊर्जं वहतमश्विना युवम् ॥ ३ ॥ [९]
इति सामवेदे उत्तराग्रन्थस्यैकोनविंशाध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

१ ३ २र ३ २उ ३ २ ३ १ २र ३ १ २
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
२ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषᳫ
३ २ ३ १ २ ३ २उ ३ १ २ ३ १
स्तोतृभ्य आ भर ॥ १ ॥ अग्निर्हि वाजिनं विशे
२र ३ १ २ ३ २ ३ २ ३ २३ २
ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवᳫ स
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
प्रीतो याति वार्य्यमिषᳫ स्तोतृभ्य आ भर ॥ २ ॥
२ ३ १ २र३२उ ३ १ २ ३ १ २ १
सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः । स-
२र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
मर्वन्तो रघुद्रुवः सᳫ सुजातासः सूरय इषᳫ स्तो-

२ ३ १ २ ३ १ २ ३१ २
त्वम्य आ भर॥ ३॥ [ १० ] महे नो अद्य बोः
३१ २ ३ २ ३ १ २ १२ ३ १ २
धयोषो राये दिवित्मती। यथा चिन्नो अबोध-
३ १ २ ३ १ २र ३ १ २
यः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते॥ १॥
१ २ ३ १ २ ३ १ २र १
या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः। सा
२ ३ १ २ ३ १ २ ३ १ २र ३ १
व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अ-
२ १ २ ३ २ ३ १ २ ३क २र
श्वसूनृते॥ २॥ सा नो अद्याभरद्वसुर्व्युच्छा दु-
२उ ३ १ २ ३ १ २ ३
हितर्दिवः। यो व्यौच्छः सहीयसि सत्यश्रवसिवा
१ १ २र ३ १ २ १ २ ३
य्ये सुजाते अश्वसूनृते॥ ३॥ [ ११ ] प्रति प्रि-
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यतमं रथं वृषणं वसुवाहनम्। स्तोता वाम-
३ २ ३ १ २ ३ २ ३ २ ३ १ २
श्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रु-
३ १ २ ३ १ २ ३ १
तं हवम्॥ १॥ अत्यायातमश्विना तिरो वि-
२र ३ १ २र ३ ३ १ २ ३ १ २ ३
श्वा अहं सना। दस्रा हिरण्यवर्त्तनी सुषुम्णा
१ ३ ३ २ १ १ २ ३ १ २
सिन्धुवाहसा माध्वी मम श्रुतं हवम्॥ २॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम्।

२ ३ १ २ ३ १ २ ३ २ ३
रुद्रा हिरण्यवर्त्तनी जुषाणा वाजिनीवसू माध्वी
१ २ ३ १ २
मम श्रुतᳪ हवम् ॥ ३ ॥ [१२]

इति सामवेदे उत्तराग्रन्थस्य
एकोनविंशाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३
अबोध्यग्निः समिधा जनानां प्रति धेनुमिवाय-
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
तीमुषासम्। यह्वा इव प्र वयामुज्जिहानाः प्र
३ १ २ ३ २ ३ १ २ १ २ ३ १ २
भानवः सस्रते नाकमच्छ ॥ १ ॥ अबोधि होता
३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात्।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ १ २
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निर-
१ २ ३ १ २ ३ १ २ ३ १ २
मोचि ॥ २ ॥ यदीं गणस्य रशनामजीगः शुचिर-
३ १ २ ३ १ २ ३ १ १ २
ङ्क्ते शुचिभिर्गोभिरग्निः। आद्दक्षिणा युज्यते
३ १ २ ३ २ ३ १ २ ३ १ २
वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ ३ ॥
२ ३ १ ३ १ २ ३ २ ३ १ २ ३ १
[१३] इदᳪ श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः
२ ३ १ २ ३ १ २ ३ ३ १ २ ३ २
प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितु
३ २ ३ १ २ ३ २ ३ १ २ १ २ १
सवायैवा रात्र्युषसे योनिमारैक् ॥ १ ॥ रुशद्वत्सा

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
मधुवाहनो रथो जीराश्वो अश्विनीर्जातु सुष्टुतः ।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
त्रिबन्धुरो मघवा विश्वसौभगः शं न आ वक्ष-
३ २ ३ १ २ २ ३ १ २ ३
द्विपदे चतुष्पदे ॥ ३ ॥ [१७] प्र ते धारा अस-
१ २ ३ १ २र ३ १ २ २ ३ १ २
श्चतो दिवो न यन्ति वृष्टयः । अच्छा वाजं
३ १ २ १ २ ३ २ ३ २ ३ २ ३
सहस्रिणम् ॥ १ ॥ अभि प्रियाणि काव्या विश्वा
१ २ १ २ ३ १ २र
चक्षाणो अर्षति । हरिस्तुञ्जान आयुधा ॥ २ ॥
१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
३ १ २र २ ३ १ २
श्येनो न वꣳसु षीदति ॥ ३ ॥ स नो विश्वा
३ २उ ३ १ २ ३ २ २र ३ १ २ ३ १
दिवो वसूतो पृथिव्या अधि । पुनान इन्दवा
२
भर ॥ ४ ॥ [१८]

इति अष्टमप्रपाठकस्य तृतीयार्द्धम् ।

इति सामवेदे उत्तराग्रन्थस्यैकोनविंशा

ध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

इति अष्टमः प्रपाठकः ।

अथ नवमः प्रपाठकः ।

अथ त्रिंशोऽध्याय आरभ्यते ।

नवममप्रपाठकस्य प्रथमार्द्धम् ।

१ २ १ २ ३ १ २ ३ १ ३२ ३ १
प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसः । देवाए
२२ ३ १ २ १ २ ३ १ २ ३ १
अनु प्रभूषतः ॥ १ ॥ सप्तिं मृजन्ति वेधसो गृण-
२ ३ १ २ ३ २ १ २ ३ २ ३क २२
न्तः कारवो गिरा । ज्योतिर्जज्ञानमुक्थ्यम् ॥२॥
२ १ २ ३ १ २ ३ १ २
सुषहा सोम तानि ते पुनानाय प्रभूवसो ।
१ २ ३ १ २ ३ २ ३ २ ३
वर्धा समुद्रमुक्थ्य ॥ ३ ॥ [१] एन्द्र ब्रह्मा य
३ २ ३ २ ३ १ २ ३ २ ३ १ २२
ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ १ ॥ त्वमिच्छ-
३ २ ३ २ ३ १ ३ १ २ २ ३ २
वसस्पते यन्ति गिरो न संयतः ॥ २ ॥ वि स्रुत-
३ १ ३ ३ २३ २ ३ २ ३ २ ३
यो यथा पथो० ॥ ३ ॥ [२] आ त्वा रथं यथो-
३ २ १ २ ३ १ २ ३ १ २ ३ १ २
तये० ॥ १ ॥ तुविशुष्म तुविक्रतो शचीवो विश्व-
१ २ ३ २ १ २
या मते । आ पप्राथ महित्वना ॥ २ ॥ यस्य ते
३ २ ३ १ २२ ३ १ २ ३ १ २ २ ३ १ २
महिना महः परि ज्मायन्तमीयतुः । हस्ता वज्रं
२ १ २ २३ ३ १ २ ३ १ २
हिरण्ययम् ॥ ३ ॥ [३] आ यः पुरं नार्मिणीमदी-
३ १ २ ३ १ २ ३ २ १ २ २ ३ १ ३ २ २ ३
देदत्यः कविर्नभन्योऽ नार्वा । सूरो न रुरुक्वा छ-

३र   २ ३ १   २   १
र्हीतेव मत्सति ॥ ३ ॥ [८] बण्महाँ असि सूर्य्य-
१२   ३१   २   ३१२ ३१   २ ३१
बडादित्य महाँ असि । महस्ते सतो महिमा
२   ३१ २ ३१   २   १ २
पनिष्टम मह्ना देव महाँ असि ॥ १ ॥ बट् सू-
३ १२   ३१   २   ३१ २ ३१   २
र्य्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
३२ ३१२ ३क २र ३१ २   ३२उ   ३१२
मह्ना देवानामसूर्य्यः पुरोहितो विभु ज्योतिरदा-
भ्यम् ॥ २ ॥ [९]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

१२ ३ १२   ३२ ३१२   १२३
उप नो हरिभिः सुतं याहि मदानां पते । उप नो
१ २ ३२   ३१   २र३१२   ३१
हरिभिः सुतम् ॥ १ ॥ द्विता यो वृत्रहन्तमो विद
२र ३१२   १२ ३ १२   ३२
इन्द्रः शतक्रतुः । उप नो हरिभिः सुतम् ॥ २ ॥
१   २र   ३१   २र३१२   १२३
त्वंहि वृत्रहन्नेषां पाता सोमानामसि । उप नो
१२   ३२   १ २   ३१ २३१२
हरिभिः सुतम् ॥ ३ ॥ [१०] प्र वो महे महेवृधे
३ १२ ३ १ २३१२   १२ ३१
भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् । विशः पूर्वीः
३र   ३ १ २   ३१२
प्र चर चर्षणिप्राः ॥ ३ ॥ उरुव्यचसे महिने

३ १ २र ३ १ २ ३ १ २ १ २
सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः । तस्य
३ २ ३ १ २ ३ १ २ २ ३
व्रतानि न मिनन्ति धीराः ॥ २ ॥ इन्द्रं
२ ३ १ २ ३ २ ३ १ २र ३ १ २
वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सह-
१ २ ३ २ ३ १
ध्यै । हर्यश्वाय बर्हया समापीन् ॥ ३ ॥ [११]
१ २ ३ १ २ ३ १ ३ १ २ ३ १ २र ३ २ ३ १
यदिन्द्र यावतस्त्वमेतावदहमीशीय । स्तोतारमि-
२ ३ १ २ ३ १ २
द्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ १ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
२उ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता
३ २ ३ १ २र ३ २उ ३ २ ३
च न ॥ २ ॥ [१२] श्रुधी हवं विपिपानस्याद्रेर्बोधा
३ ३ १ २ ३ २ ३ २उ ३ १ २ ३
विप्रस्यार्चतो मनीषाम् । कृष्वा दुवांस्यन्तमा
२ ३ २ २ ३ २ ३ १ २ ३ २ ३ १
सचेमा ॥ १ ॥ न ते गिरो अपि मृष्ये तुरस्य न
२ ३ १ २ ३क २र ३ २ १ २ ३ १ २
सुष्टुतिमसुर्यस्य विद्वान् । सदा ते नाम स्वयशो
२ ३ २ ३ १ २ ३ १ २ ३ १ २
विवक्मि ॥ २ ॥ भूरि हि ते सवना मानुषेषु भूरि
३ १ २ ३ ३ १ २उ ३ १ २ ३
मनीषी हवते त्वामित् । मारे अस्मन् मघवं

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
तात्मा ॥ १ ॥ अभि द्विजन्मा त्री रोचनानि वि-
३ १२ ३ १ २ २ ३ १ २
श्वा रजाꣳसि शुशुचानो अस्थात् । होता यजि-
३ २ ३ १ २ ३२उ ३ २ १
ष्ठो अपाꣳ सधस्थे ॥ २ ॥ अयꣳ स होता यो द्वि-
२ ३ १ २ ३ १ २र ३ २ २ ३ १
जन्मा विश्वा दधे वार्य्याणि श्रवस्या । मर्त्तो यो
२ ३ १ २ ३ १ २ २ ३ ९ ३ २
अस्मै सुतुको ददाश ॥ ३ ॥ [४] अग्ने तमद्या-
३ २उ ३ २ ३ २ ३ १ २ ३ १ २ ३
श्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋ-
१-२ ३ १ २ २ ३क २र ३ १ २ ३ २ ३
ध्यामा त ओहैः ॥ १ ॥ अधा ह्यग्ने क्रतोर्भद्रस्य
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥२॥
३ १ २ ३ १ २र ३ २ १ २र २
एभिर्नो अर्कैर्भवा नो अर्वाकूस्वऽर्ण ज्योतिः अ-
३ १ ३ ३ २ ३ १ २
ग्ने विश्वेभिः सुमना अनीकैः ॥ ३ ॥ [५]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
प्रथमः खण्डः ॥ १ ॥

२ ३ १ २ ३ १ ३ १ २र २
अग्ने विवस्वदुपसश्चित्रꣳ राधो अमर्त्य । आ
३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
दाशुषे जातवेदो वहा त्वमद्या देवाꣳ उषर्बुधः
२ ३ २ ३ १ २र ३ १ २ ३ २
॥ १ ॥ जुष्टो हि दूतो असि हव्य वाहनोऽग्ने

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रथीरध्वराणाम्। सजूरश्विभ्यामुषसा सुवीर्य्य
३ १ २ ३ १ २ ३ २ ३ १ २ ३
मस्मे धेहि श्रवो बृहत्॥ २॥ [६] विधुं दद्रा-
१ २र ३ १ २र ३ १ २ ३ १ २
णꣳ समने बहूनां युवानꣳ सन्तं पलितो जगार।
३ १ २ ३ १ २ ३ २उ ३ २ ३ १
देवस्य पश्य काव्यं महि त्वाद्या ममार स ह्यः
२र १ २ ३ १ २ ३ १ २ ३ २उ
समान॥ १॥ शाक्मना शाको अरुणः सुपर्ण आ
३ १ २र ३ १ २र २ ३ १ २ ३ २उ
यो महः शूरः सनादनीडः। यच्चिकेत सत्यमि-
३ १ २ ३ २ ३ २उ ३ १ २र
त्तन्न मोघं वसु स्पार्हमुत जेतोत दाता॥ २॥
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १
एभिर्ददे वृष्ण्या पौꣳस्यानि येभिरौक्षद्वृत्रह-
२ ३२ २ २र ३ १ २ ३ १ २
त्याय वज्री। ये कर्मणः क्रियमाणस्य मह्न ऋ-
३ २ ३ १ २ ३ २ २ ३ १ २
तेकर्ममुदजायन्त देवाः॥ ३॥ [७] अस्ति सोमो
३ २ ३ १ २र ३ १ २ ३ २ ३ १ २
अयꣳ सुतः पिबन्त्यस्य मरुतः। उत स्वराजो
३ १ २ १ २ ३ १ २ ३ १ २र
अश्विना॥ १॥ पिबन्ति मित्रो अर्य्यमा तना
१ २ ३ १ २ ३ २ ३ १ २ ३
पूतस्य वरुणः। त्रिषधस्थस्य जावतः॥ २॥ उ-
१ २ ३ २ ३ १ २र ३ २ ३ १ २ १ ३
तो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः। प्रात-

१ २
ज्योक् ॥ ३ ॥ [१३]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

१ २ ३१ २र ३ १ २ ३ १ २
प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके
३ २ ३ २ ३ १ २ ३ २ ३ १ २
चिदु लोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि
३ १ २र ३ १ २ ३ २उ ३ १ २
चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु
२उ ३ १ २ ३ २ ३ २ ३ १ २
॥ १ ॥ त्वꣳ सिन्धूꣳरवासृजोऽधराचो अहन्नहिम् ।
२ १ २ ३ १ २ ३ १ २
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्य्यम् ।
२ ३ १ २ ३ १ २ ३ १ २ ३ २उ
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका
३ १ २ २उ ३ १ २ ३ १
अधि धन्वसु ॥ २ ॥ वि षु विश्वा अरातयोऽर्य्यो
२ ३ १ २ १ २ ३ १ २ ३ १ २र
नशन्त नो धियः । अस्तासि शत्रवे वधं यो न
३ ३ २ १ २ ३ २ ३ २उ ३ १ २
इन्द्र जिघाꣳसति । या ते रातिर्ददिर्वसु नभन्ता
३ १ २ ३ २उ ३ १ २
मन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥ [१४]
३ २उ ३ १ १ ३ १ २र ३ १ २ १ २
रेवाꣳ इद्रेवत स्तोता स्यात्त्वावतो मघोनः । प्रेदु
३ १ २ ३ २ ३ २ ३ १ २ ३
हरिवः सुतस्य ॥ १ ॥ उक्थं च न शस्यमानं

१ २ ३ १ ३१ १ २ ३ २ ३ १ २
नागो रयिरा चिकेत । न गायत्रं गीयमानम्
१ २ ३ २ ३ १ २३ ३ १ २
॥ २ ॥ मा न इन्द्र पीयत्नवे मा शर्द्धते परा
१ २ ३ १ २ १ २ ३
दाः । शिक्षा शचीवः शचीभिः ॥३॥ [१५] एन्द्र याहि
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३
हरिभिरुप कण्वस्य सुष्टुतिम् । दिवो अमुष्य
१ २ ३ १ २ ३१ २ ३ २ ३
शासतो दिवं यय दिवावसो ॥ १ ॥ अत्रा वि ने-
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मिरेषामुरां न धनुते वृकः । दिवो अमुष्य शास-
३ १ २ ३ १ २ २ ३ २ ३ १
तो दिवं यय दिवावसो ॥२॥ आ त्वा ग्रावा व-
२ ३ २ २ १ २र १ २ ३ २ ३ १
दन्निह सोमी घोषेण वक्षतु । दिवो अमुष्य शा-
२ ३ १ २ ३१ २ ३ १ २ १ २
सतो दिवं यय दिवावसो ॥ ३ ॥ [१६] पवस्व
३ २ ३ १ २ ३ १ २ २ ३१
सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १ ॥ ते सुता-
२ ३ १ २ ३ २ ३ १ २ १ २
सो विपश्चितः शुक्रा वायुमसृक्षत ॥ २ ॥ असृग्रं
३ १ २ ३ २ ३ १ २
देववीतये वाजयन्तो रथा इव ॥ ३ ॥ [१७]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

३ १ २र ३ १ २ ३ १ २ ३१
अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं स-

१ २
उयोक्कः ॥ ३ ॥ [१३]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

१ २ ३१ २र ३ १ २ ३ १ २
प्रो ष्वस्मै पुरोरथमिन्द्राय शूपमर्चत । अभीके
३ २ ३ २ ३ १ २ ३ २ ३ १ २
चिदु लोककृत्सङ्गे समत्सु वृत्रहा। अस्माकं बोधि
३ १ २र ३ १ २ ३ २उ ३ १ २
चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु
२उ ३ १ २ ३ २ ३ २ ३ १ २
॥ १ ॥ त्वᳫं सिन्धूᳫंरवासृजोऽधराचो अहन्नहिम् ।
३ १ २ ३ १ २ ३ १ २
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्य्यम् ।
२ ३ १ २ ३ १ २ ३ १ २ ३ २उ
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका
३ १ २ २उ ३ १ २ ३ १
अधि धन्वसु ॥ २ ॥ वि षु विश्वा अरातयोऽर्य्यो
२ ३ १ २ १ २ ३ १ २ ३ १ २र
नशन्त नो धियः । अस्तासि शत्रवे वधं यो न
३ ३ २ १ २ ३ २ ३ १उ ३ १ २
इन्द्र जिघाᳫंसति । या ते रातिर्ददिर्वसु नभन्ता
३ १ २ ३ २उ ३ १ २
मन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥ [१४]

३ २उ ३ १ ३ ३ १ २र ३ १ २ १ २
रेघाᳫं इद्रे व्रत स्तोता स्यात्वावतो मघोनः । प्रेदु
३ १ २ ३ २ ३ २ ३ १ २ ३
हरिवः सुतस्य ॥ १ ॥ उक्थं च न शस्यमानं

१ २ २ १ १ ३२ १ २ ३ २ ३ १ २
नागो रयिरा चिकेत । न गायत्रं गीयमानम्
१ २ ३ २ ३ १ २१ ३ १ २
॥ २ ॥ मा न इन्द्र पीयत्नवे मा शर्द्धते परा
१ २ ३ १ २ १ २ ३
दाः । शिक्षा शचीवः शचीभिः ॥३॥ [१५] एन्द्र याहि
१ २३ २ ३ १ २ ३ २ ३ २ ३ २ ३
हरिभिरुप कण्वस्य सुष्टुतिम् । दिवो अमुष्य
१ २ ३ १ २ ३ १ २ ३ २ ३
शासतो दिवं यय दिवावसो ॥ १ ॥ अत्रा वि ने-
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मिरेषामुरां न धनुते वृकः । दिवो अमुष्य शास-
३ १ २ ३ १ २ २ ३ २ ३ १
तो दिवं यय दिवावसो ॥ २ ॥ आ त्वा ग्रावा व-
२ ३ २ ३ १ २ २ ३ २ ३ १
दन्निह सोमी घोषेण वक्षतु । दिवो अमुष्य शा-
२ ३ १ २ ३ १ २ ३ १ २ १ २
सतो दिवं यय दिवावसो ॥ ३ ॥ [१६] पवस्व
३ २ ३ १ २ ३ १ २ २ ३ १
सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १ ॥ ते सुता-
२ ३ १ २ ३ २ ३ १ २ १ २
सो विपश्चितः शुक्रा वायुमसृक्षत ॥ २ ॥ असृग्रं
३ १ २ ३ २ ३ १ २
देववीतये वाजयन्तो रथा इव ॥ ३ ॥ [१७]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

३ १ २र ३ १ २ ३ १ २ ३ १
अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं स-

हसो जातवेदसं विप्रं न जातवेदसम्। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः॥१॥ यजिष्ठं त्वा ययजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः। परिज्मानमिव द्याᳲ होतारं चर्षणीनाम्। शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः॥२॥ स हि पुरु चिदोजसा विरुक्मता दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः। वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम्। निष्षहमाणो यमते नायते धन्वासहा नायते॥३॥ [१८]

इति नवमप्रपाठकस्य प्रथमार्द्धम्।

नवमप्रपाठकस्य द्वितीयार्द्धम्।

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो। बृहद्भानो शवसा वाजमुक्थ्याᳲ दधा-

३ १ ३ १२ ३१२ १२ ३
सि दाशुषे कवे॥१॥पावकवर्चाः शुक्रवर्चा अनूनवर्चा
१ २ ३१२ ३२ ३१२ ३२३१२
उ दियर्षि भानुना । पुत्रो मातरा विचरन्नुपावसि
३२ ३ १२ ३२ १२
पृणक्षि रोदसी उभे ॥ २ ॥ ऊर्जो नपाज्जातवेदः
३ २ ३१२ ३ १ २३२ २उ ३ १
सुशस्तिभिर्मन्दस्व धीतिभिर्हितः । त्वे इषः स
२३१२ ३१२ ३१२
दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ ३ ॥ इर-
१ २ ३ १ २३१ २र
ज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
२ २३ ३ १२३ १ २ ३१ ३१
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्र-
२र ३ १२ ३ २३१ २ ३ १२३
तुम् ॥ ४ ॥ इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं
१ २ ३२ ३२ ३ १२ ३१२ ३२उ ३
राधसो महः । रातिं वामस्य सुभगां महीमिषं
१ २ ३२ ३२ ३ १ २
दधासि सानसिं रयिम् ॥ ५ ॥ ऋतावानं म-
३२ ३१२ ३ २ ३१२ ३१
हिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो ज-
२र १२ ३१२ ३२उ ३ १
नाः । श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मा-
२ ३२
नुषा युगा ॥ ६ ॥ [१]

इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
पञ्चमः खण्ड ॥ ५ ॥

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाज-
२ ३ २ ३ १ १ २ ३
कर्मभिः । यस्य त्वꣳ सख्यमाविथ ॥ १ ॥ तव द्र-
१ २र ३ २ ३ २ ३ १ २ ३ १
प्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा
२ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
ददे । त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु
१ २र ३ १ २ ३ २ ३
राजसि ॥ २ ॥ [२] तमोषधीर्दधिरे गर्भमृत्वियं
१ २र ३ १ २ ३ १ २ १ २र ३ २ ३
तमापो अग्निं जनयन्त मातरः । तमित्समानं व-
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
निनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥१॥
३ १ २र ३ २ ३ १ २र
[३] अग्निरिन्द्राय पवते दिवि शुक्रो वि राज-
१ २ ३ १ २ २ ३ २
ति । महिषीव वि जायते ॥ १॥ [४] यो जागा-
३ १ २र १ २ ३ २ ३ २३ १ २
र तमृचः कामयन्ते यो जागार तमु सामानि य-
२ ३ २ ३ २३ १ २र ३ २ ३ १ २
न्ति । यो जागार तमयꣳ सोम आह तवाहमस्मि
३ १ २ ३ १ २ ३ १ २र
सख्ये न्योकाः ॥ १ ॥ [५] अग्निर्जागार तमृचः
३ १ २ ३ २ ३ २ ३
कामयन्ते अग्निर्जागार तमु सामानि यन्ति ।
३ १ २ ३ २ ३ १ २र ३ २ ३ १ २
अग्निर्जागार तमयꣳ सोम आह तवाहमस्मि

२ १ २ १२ ३ १ २ ३ २
सख्ये न्योका. ॥ १ ॥ [६] नमः सखिभ्य पूर्वस-
३ १ २ ३ १ २ ३ १ ३२ ३१२
द्भ्यो नम. साकन्निषेभ्यः । युञ्जे वाचꣳ शतप-
३ १ ३२ ३१२३ १२३१२
दीम् ॥ १ ॥ युञ्जे वाचꣳ शतपदीं गाये सहस्र-
३ १ ३२३ १ २ ३ १
वर्तनि । गायत्रं त्रैष्टुभं जगत् ॥ २ ॥ गायत्रं
३२३२३१२ ३२३१२ ३१ ३२
त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता । देवा ओका-
३२ ३ २उ ३ १ २
ꣳसि चक्रिरे ॥ ३ ॥ [७] अग्निर्ज्योतिर्ज्योति-
२ २उ ३ २ १२ ३१ २३ २ ३
रग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः । सूर्यो ज्योति-
२ ३ १ २ १२३१ ३२ ३ १२
र्ज्योतिः सूर्य्य. ॥ १ ॥ पुनरूर्जा नि वर्त्तस्व पुन-
३ १ २ १ २ ३ १ २ २
रग्न इषायुषा । पुनर्नः पाह्यꣳहस ॥ २ ॥ सह
३ १ ३२३२ ३ १ २३ १ २ ३१
रय्या नि वर्त्तस्वाग्ने पिन्वस्व धारया । विश्व-
२ ३२३१२
प्स्न्या विश्वतस्परि ॥ ६ ॥ [८]

इति सामवेद उत्तराग्रन्थस्य विंशाध्यायस्य
षष्ठ. खण्डः ॥ ६ ॥

२ ३ ३ २उ ३ १ २ ३ २ ३ २ ३ २ ३
यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तो-
२ ३ १ २ १ २ ३ १ २
ता मे गोसखा स्यात् ॥ १ ॥ शिक्षेयमस्मै दित्से
३ १ २ ३ १ २ २ ३ १ ३२३ २
यꣳ शचीपते मनीपिणे । यदहं गोपतिः स्याम्

३ १ २ ३ २ ३ १ २ ३ २
॥ २ ॥ धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
१ २र ३ १ २ २ ३ १
गामश्वं पिप्युषी दुहे ॥ ३ ॥ [९] आपो हि ष्ठा
२र ३ २ ३ १ १ ३ १ २ २ ३ १ २र ३ १ २
मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्ष-
१ २ ३ १ २ ३ २ ३ १ २ ३ १
से ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह
२ ३ १ २ ३ १ २ २ ३ १ २
नः । उशतीरिव मातरः ॥ २ ॥ तस्मा अरं ग-
३ २ ३ १ २ ३ १ २ १ २ ३ १ २
माम वो यस्य क्षयाय जिन्वथ । आपो जनय-
२ ३ १ २ ३ २
था च नः ॥ ३ ॥ [१०] वात आ वातु भेषजं
३ १ २ ३ १ २ ३ २ २ ३ १ २
शम्भु मयोभु नो हृदे । प्र न आयूंषि तारि-
३ १ २ ३ १ २ ३ २उ ३ २ ३
षत् ॥ १ ॥ उत वात पितासि न उत भ्रातोत नः
१ २ १ २ ३ १ २ २ ३ १ २
सखा स नो जीवातवे कृधि ॥ २ ॥ यददो वात
३ २ २ ३ १ २ ३ १ २ १ २ २
ते गृहेऽमृतं निहितं गुहा । तस्य नो धेहि जी-
१ २ ३ २ ३ २ ३ १ २ ३ १
वसे ॥ ३ ॥ [११] अभि वाजी विश्वरूपो जनि-
२ ३ २ ३ २ ३ १ २ ३ २ १ २ ३ १
त्रं हिरण्ययं बिभ्रदत्कं सुपर्णः । सूर्य्यस्य भानु-
२ ३ १ २र ३ १ २ ३ १ ३र ३ १ २
मृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥१॥
३ १ २र ३ १ २ ३ २ २ ३ २उ ३
अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
यत्सम्बभूव । अन्तरिक्षे स्वं महिमानं मिमानः
१ २ ३ २ ३ १ २ ३ १ २ ३ ३ २ ३ २
कनिक्रन्ति वृष्णो अश्वस्य रेत. ॥ २ ॥ अयꣳ सह-
३ १ २ ३ १ २र १ २ ३ २ ३ १ २
स्रा परि युक्ता वसानः सूर्य्यस्य भानुं यज्ञो दधार ।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
सहस्रदाः शतदा भूरिदावा धर्त्ता दिवो भुवनस्य
३ १ २ १ २ ३ २उ ३ १ २उ
विश्पतिः ॥ ३ ॥ [१२] नाके सुपर्णमुप यत्पतन्तꣳ
३ १ २र ३ १ २ १ २ ३ १ २
हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरु-
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
णस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १ ॥ ऊर्ध्वो
२ ३ ३उ ३ १ २ ३ २ ३ १ २र ३ १
गन्धर्वो अधि नाके अस्थात्प्रत्यङ् चित्रा बिभ्रदस्या-
२ १ २ ३ १ २ ३ २ ३ २ ३
युधानि । वसानो अत्कꣳ सुरभिं दृशे कꣳ स्वाऽ३र्ण
२र ३ १ २ ३ १ २ ३ २ ३ १
नाम जनत प्रियाणि ॥ २ ॥ द्रप्सः समुद्रमभि
२र ३ २ ३ १ २ ३ १ २ ३ १ २ ३
यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् । भा-
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
नुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि
३ १ २
प्रियाणि ॥ ३ ॥ [१३]

इति नवमप्रपाठकस्य द्वितीयार्द्धम् ।
इति सामवेदे उत्तराग्रन्थस्य विंशाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

इति नवस्य द्वितीयोऽर्द्धप्रपाठकः।

अथैकविंशोऽध्याय आरभ्यते।

नवमप्रपाठकस्य तृतीयार्द्धम्।

३ १ २र ३ २उ ३ १ २ ३ १
आशुः शिशानो वृषभो न भीमो घनाघनः
२र ३ २ ३ १ २ ३ १ २
क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एक
३ २ ३ १ २र ३ १ २र
वीरः शतꣳ सेना अजयत्साकमिन्द्रः॥ १॥
३ १ २ ३ १ २ ३ १ २ ३ १ २
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्य
३ १ २ ३ १ २ १ २र २ १ २ १
वनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं
१ २ ३ १ २ ३ १ २ १ २र ३
युधो नर इषुहस्तेन वृष्णा॥ २॥ स इषुहस्तैः
१ २ ३ १ २ ३ १ २र ३ २उ ३ १ २ ३ १ २ ३
स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳ
१ २ ३ २ २ ३ २ १ २ ३ १ २ ३ १
सृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिर-
२ १ २ ३ १ २ ३ १ २ ३ १ २र
स्ता॥३॥[१] बृहस्पते परि दीया रथेन रक्षोहामित्राꣳ
३ १ २ ३ २ २र ३ २ ३ १ २र ३
अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्न-
१ २ ३ १ २र ३ १ २र ३
स्माकमेध्यविता रथानाम्॥१॥ बलविज्ञायः स्थविरः
१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवी-
३ १ २ ३ १ २र ३ २ ३ १ २
रो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ

३ २ ३ १ २ ३ २ ३ १ २ ३ १
गोवित् ॥ २ ॥ गोत्रभिदं गोविदं वज्रबाहुं ज-
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजातो अनु
३ १ २ ३ २ ३ १ २
वीरयध्वमिन्द्रꣳ सखायो अनु सꣳ रभध्वम् ॥३॥
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
[२] अभि गोत्राणि सहसा गाहमानोऽदयो वीरः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽ३ऽ-
२ ३ १ २ ३ २ ३ २ १ २
स्माकꣳ सेना अवतु प्र युत्सु ॥ १ इन्द्र आसां
३ २उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । दे-
१ २ ३ १ २र ३ १ २ ३
वसेनानामभिभञ्जतीनां जयन्तीनां मरुतो य-
१ २ १ २ ३ २ ३ १ २ ३ १ २
न्त्वग्रम् ॥ २ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आ
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
दित्यानां मरुताꣳ शर्द्ध उग्रम् । महामनसां
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
भुवनच्यवानां घोषो देवानां जयतामुदस्थात्
१ २ ३ १ २ ३ १ २र
॥ ३ ॥ [३] उद्धर्षय मघवन्नायुधान्युत्सत्वनां
३ २ ३ १ २ १ २ ३ २ ३ १ २
मामकानां मनाꣳसि । उद्वृत्रहन् वाजिनां वाजि-
३ २र ३ १ २ ३ १ २
नान्युद्रथानां जयतां यन्तु घोषाः ॥ १ ॥
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २र
अस्माकमिन्द्रः समृतेषु ध्वजेष्व स्माकं या इष-

३ १ २ ३ १ २ ३ १ २र ३
वस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्व-
१ २ ३ १ २ ३ १
स्मा४ उ देवा अवता हवेषु ॥ २ ॥ असौ या
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
सेना मरुतः परेषामभ्येति न ओजसा स्पर्द्धमा-
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २उ
ना । तां गूहत तमसापव्रतेन यथै तेषामन्यो अन्यं
३ २ ३ १ २ ३ १ २ ३
न जानात् ॥ ३ ॥ [४] अमीषां चित्तं प्रतिलो-
१ २ ३ १ ३ १ २ ३ २उ ३ १
भयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि नि-
२ ३ १ २र ३ २ ३ २ ३ १ २
र्दह हृत्सु शोकै रन्धेनामित्रास्तमसा सचन्ताम्
२ ३ १ २ ३ १ २ ३ १ २
॥ १ ॥ प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
३ १ २ ३ १ २ ३ १ २र
उग्रा वः सन्तु बाहवो ऽनाधृष्या यथासथ ॥२॥
१ २ ३ १ २ ३ १ २ ३ १ २ २ ३
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते । गच्छा-
२ ३ १२ २ ३ २उ ३ २ ३ १ २
मित्रान् प्र पद्यस्व मामीषां कं च नोच्छिषः
३ १ २ ३ १ २र ३ १ २
॥ ३ ॥ [५] कङ्काः सुपर्णा अनु यन्त्वेनान् गृध्रा-
३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३
णामन्नमसावस्तु सेना । मैषां मोच्यघहारश्च
२ ३ १ २ ३ १ २ ३ १ २ ३
नेन्द्र वयां४ स्येनाननुसंयन्तु सर्वान् ॥ १ ॥ अमि-
१ २ ३ १ २ ३ २ ३ २ ३ १ २र
त्रसेनां मघवन्नस्मा छत्रुयतीमभि । उभौ तामि-

३ १ २ ३ १ २ १ २ ३
न्द्र वृत्रहन्निन्द्र दहतं प्रति ॥ २॥ यत्र बा-
२ ३ १ २ ३ १ २ ३ १ २ १ २ ३
णाः सम्पतन्ति कुमारा विशिखा इव । तत्र नो
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म
२उ ३ १ २र ३ २
यच्छतु ॥ ३ ॥ [६] वि रक्षो वि मृधो जहि वि
३ २ ३ १ २ २ ३ १ २ ३ १ २
वृत्रस्य हनू रुज । वि मन्युमिन्द्र वृत्रहन्नमित्रस्या-
३ १ २ १ २ ३ १ २ ३ १
भिदासतः ॥ १ ॥ वि न इन्द्र मृधो जहि नीचा
२ ३ २ २ ३ १ २ ३ ३ ३ १ २
यच्छ पृतन्यतः । यो अस्माँ अभिदासत्यधरं
३ १ २ १ २ ३१ २र ३ १ २
गमया तमः ॥ २ ॥ इन्द्रस्य बाहू स्थविरौ युवा-
३ १ २ ३ १ २ ३ २ १ २
ना वनाधृष्यौ सुप्रतीकावसह्यौ । तौ युञ्जीत
३ २र ३ १ २ ३ १ २ ३१ २र ३ १
प्रथमौ योग आगते याभ्यां जितमसुराणा ५ स-
२ ३ २ १ २ ३ १ २
ह्यो महत् ॥ ३ ॥ [७] मर्माणि ते वर्मणा छादया-
२ १ २ ३ २ ३ २ ३ १ २ ३ १ २र
मि सोमस्त्वा राजामृतेनानु वस्ताम् । उरोर्वरी-
३ १ २ ३ १ २ ३ १ २ ३ १ २
यो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु
३ १ २ ३ १ २
॥ १ ॥ अन्धा अमित्रा भवताशीर्षाणोऽहय इव ।
१ २ ३ १ २ ३ १ २ ३ १ २
तेषां वो अग्निनुन्नाना मिन्द्रो हन्तु वरंवरम्

॥ २ ॥ यो नः स्वोऽरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरं शर्म वर्म ममान्तरम् ॥ ३ ॥ [८] मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रूं ताढि वि मृधो नुदस्व ॥ १ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ओ३म् । स्वस्ति नो बृहस्पतिर्दधातु ॥ ३ ॥ [९]

इति नवमप्रपाठकस्य तृतीयार्द्धम् ।

इति सामवेदे उत्तराग्रन्थस्य एकोविंशाध्यायस्य प्रथमः खण्डः ॥ ५ ॥

उत्तरार्चिकं समाप्तम्

समाप्तेयं संहिता ।